॥ श्रीगणेशायनमः ॥ श्रीरामचंद्रायनमः ॥ कल्याणंवोविधत्तांप्रबलगतिमहाविघ्ननागेंद्रसिंहोहास्तिश्रेष्ठःस्वतःसन्प्रथय
तिनितरांयोगजास्याभिधानं ॥ अन्यच्चित्रंविधत्तेसृणिमपिसततंधारयन्पाणिनायोयश्चास्तेमोदकेनाकलितकरतलोव्यंज
यन्भकभक्तिं ॥ १ ॥ अगजातिप्रियामातानागजातिप्रियःपिता ॥ द्रागगजादिनुतोभ्रातासगजास्योस्तुमेविता ॥ २ ॥ ना
गःशयेयस्यभवत्यभीष्टोवृषाकपायीवनितायदीया ॥ प्रद्युम्नवृद्धेःकरणेवरेण्यःसनःशरण्योहरिरस्तुभूत्यै ॥ ३ ॥ यःका
लसर्पेणसुतीक्ष्णदंशान्मुहुर्मुहुःकारयितानरेंद्रः ॥ किंतेनयःकालभुजंगपाशोन्मोक्तासरामोननुवर्णनीयः ॥ ४ ॥ यत्रा-
स्तिसत्यंवशितोपरामःश्रितव्रजानांविपदांविरामः ॥ तावत्तुदीनव्रतमाचरामोयावन्नरामंशरणंसरामः ॥ ५ ॥ मायया
तवविभोनियंत्रितोज्ञानलेशरहितोस्मिसर्वशः ॥ वर्णनेकृतमतिंसुदुष्करेपाहिमांरघुपतेंतरायतः ॥ ६ ॥ अस्तिप्रशस्तोत्त
रकोसलेषुराज्ञामयोध्येतिपुरीरघूणां ॥ नाम्नार्थतोयानगरीषुमध्येदृश्याधिभूत्वेनदृशाधुनापि ॥ ७ ॥ किंतांपुरींसंस्कृति
लब्धवर्णासंवर्णयेयुर्यदिलब्धवर्णाः ॥ शिरोगृहंकिंप्रतिसद्मयस्यांनपामरःशंसतिचंद्रशालां ॥ ८ ॥ भूत्वापतन्केतुमि

टीप १ विष्णुःशिवः २ अधिभूर्नायकः ३ चंद्रस्यशालाशिरोगृहं





षेणकेतुर्यस्याःस्थितिंचारुतरांसमीक्ष्य ॥ राजन्वतींदुर्ग्रहभीतिदायाःप्रकंपतेमंदमरुत्प्रणुन्नः ॥ ९ ॥ यामुन्नतांद्वादशयो
जनायतांविकर्तनेनाक्रमितुंप्रवृत्तं ॥ नतद्भवेतिविचार्यकिंततःसद्वादशात्मासमभूद्दिनेशः ॥ १० ॥ नितंबिनीर्नागरिकी
र्विलोकयन्मंदस्तुमंदांगतिमेयुषीःशनिः ॥ न्हीणोग्रहाणांगमनेसगच्छतांपश्चाद्गतिःकिन्नुबभूवतद्दिनात् ॥ ११ ॥ काणी
कृतोयद्वारिणासशुक्रोबलेःकृतोतद्धितमेवतस्य ॥ विचित्रचर्यांरघुराजधानींनिरीक्षितुंदूरतरांस्वलोकात् ॥ १२ ॥ बुधःस्व
तःसंचरणंप्रकुर्वन्नूपुरस्थविद्वज्जनचित्रविद्याः ॥ विचारयंस्तत्प्रभृतिप्रयातिमित्रेणपश्चात्पुरतःसहापि ॥ १३ ॥ गृहे
गृहेरोहितभालपट्टामहीसुतोमंगलनामधेयः ॥ पदंस्वनाम्नोदधतीःसनारीरुवासपश्यन्किमुयत्रनित्यं ॥ १४ ॥ पश्चा-
त्कृतोहंवनिताभिराभिःपुरस्कृतस्यामितिजाततर्षः ॥ प्रवर्ततेजग्धुमिवेंदुबिंबंपुरस्कृतःपर्वणिराहुरेषः ॥ १५ ॥ गुरुर्व
सिष्ठोयदपीहवर्ततेतथापिजीवंबहुमानयंत्यमी ॥ इतीवमत्वागुरुरप्यभीष्टदस्तुर्यांष्टमद्वादशगोप्यजायत ॥ १६ ॥ चंद्रो
दयोनोपुरिकर्महेतुरपेक्षितोज्ञानिभिरेवबोध्यः ॥ गृहेगृहेयामवतीशमुख्योनार्योभवेयुर्यदिनप्रकामं ॥ १७ ॥ समस्त

टीप १ पुरस्कृतःपूजितेरात्यभियुक्तेग्रतःकृते

रत्नैःपुरिपूरितायांचंद्रोपलामुख्यतयात्रपायां ॥ अन्यत्रकांतामुखचंद्रदृष्टेर्जलोद्भवोभूरिभवेदितीव ॥ १८ ॥ एकास्ति
राकासकलेतिथीनांवर्गेप्रसिद्धापुरिराघवस्य ॥ नास्तीदृशीगेहततिर्मनोज्ञाःपरःशताःसंतिनयत्रराकाः ॥ १९ ॥ हितंपुरः
कांतमवेक्ष्यचंद्रोरसंसमुद्दीपयिषुर्बभूव ॥ शुचिंशुचिश्चित्रतरंकिमत्रचित्रंपरंसोपिगभस्तिमान्सन् ॥ २० ॥ यन्नामधे
येवसतिर्मदीयासास्यास्तिमातेत्यजनंदनस्य ॥ सुखंचिकीर्षूरजनीडुदीतोनोचेत्कृतघ्नत्वपदंगतःस्यां ॥ २१ ॥ पद्मंवि
नानैवयदीयपुर्यांसंख्यापिजातुप्रथिताबभूव ॥ इतीवपद्मावसतिस्मतत्रपद्मालयानित्यतयासुखेन ॥ २२ ॥ आदित्य
वंशेभ्युदितेजनंदनेपुरीतदीयापरिपूरितारसैः ॥ पद्मोद्भवैःसंततिमेतिनाद्भुतंचंद्रेप्युदीतेकमलोदयोद्भुतं ॥ २३ ॥ शीतां
शुरुष्णांशुरुभावपिद्रुतंराज्ञःपुरीमाक्रमितुंसमिच्छतः ॥ तांप्रांशुमुद्वीक्ष्यततोनुमंदतांयातःक्वचित्कालवशादितिध्रुवं ॥
॥ २४ ॥ यदायदोदेतिसुधांशुरुच्चैस्तदातदोल्लंघयितुंसमिच्छति ॥ प्रांशुत्वमस्याश्चविमृश्यपश्चान्मुहूर्तमात्रंघटतेचव
र्धते ॥ २५ ॥ प्रांशुतांसमवलोक्यनगर्याःशीतघर्मकिरणोगतिरोधः ॥ नोभवेदितिगृहाल्यवकाशेदक्षिणादगयनेकिमु-



यातः ॥ २६ ॥ सूर्योद्वीशौमंदयामंदयापिगत्यायोध्यालंघनेयत्नवंतौ ॥ आसातांतौनाभवत्तुशैघ्र्यंमांद्यंगत्योरद्यवि
द्योततेपि ॥ २७ ॥ यानुनुमनुनाशिल्पिभीरचिताविश्वासेचनकतामनुगतानहिकेवलंतथापुरोजनोमनुते ॥ यातरुणीवक
रिणीवभोगवतीवोद्यानभूमिरिवपुन्नागस्पृहणीयाविद्वत्प्रतिभेवबह्वुयोजनायुगानुयुगजातवसतिरंतर्नरयुवतिपरिवृताब
हिःसरयूपगतायस्यांचप्रतिराजपूरुषंपुरुषोत्तममधिकृत्ययुसंस्थितिर्यांवसतीकृत्यप्राणिपदमाप्ताः सदासांताःनिकतामे
वययुरतोनंदकतांययौ ॥ येषांस्वीयाधिपतित्वेनोत्तराधिपतित्वमनुत्तराधिपतित्वंव्यंजयंतीतेषांराज्ञामयोध्येतिनामपुरी
अस्ति ॥ अनुत्तमंवस्तुनत्रानियोक्तायदुत्तमंवस्तुसदावियोक्ता ॥ चतुःसमुद्रावृतभूमिभोक्ताराजाभवत्पंक्तिरथःसतस्यां
॥ २८ ॥ आश्चर्यमेतत्समभूद्धरित्रीराजन्वतीयेनसमुद्रमुद्रिता ॥ तस्याभवत्पंक्तिरथस्यराज्ञःकुनायकत्वंविहतंनजातु
चित् ॥ २९ ॥ जगत्ययोध्येतिपुरीपुरोद्भवैर्वंश्यैर्यदीयैर्विहितात्रनाद्भुतं ॥ जगत्ययोध्याविहितेतिविक्रमैश्चित्रंपरंपंक्ति-
रथेनभूभुजा ॥ ३० अवापलोकःसकलोनबंधनंकिंतर्हियस्मात्सततंनवंधनं ॥ कुतःसराजासुकलःस्वभावतोप्यतीतासिं

धुंयमुनायितंविदुः ॥ ३१ ॥ दातृत्वमेतस्यनिरीक्ष्यसुस्थिरंस्पर्शोनलोकस्यकदापिगछति ॥ स्पर्शंनुकिंकामगवीमणिर्द्रु
वोभवंतिनस्वःप्रविहायगोचराः ॥ ३२ ॥ बिभ्राणोमंदतेजःप्रतिदिनमयनेदक्षिणेघस्त्रनाथोमेघांतर्धानमाप्तोचरदपिकल
यन्स्वप्रकाशंकदाचित् ॥ पृथ्व्यांयात्रांचरिष्णोर्दशरथनृपतेःप्रस्फुरंतंप्रतापंदृष्ट्वाव्याप्त्याथतस्यक्वचिदलमभजत्किंप्रता-
पित्वमेषः ॥ ३३ ॥ प्रमनानिवासयतिजंतुसमूहंसुजनास्थितोभवतिसंपदवंध्यः ॥ रघुराजएषसततंचसुगीतोऽयुपसर्गं
तांभजतिशत्रुरथास्य ॥ ३४ ॥ द्रष्टातुरीयाद्यदशापिनित्यंसवामदेवोऽव्यवहर्तृतांगतः ॥ सुमंत्रतांमंत्रिवरोयदीयःकिंतस्य
राज्येनभवेदनूनकं ॥ ३५ ॥ अथकदाचित्स्वबाहुनिर्जितवैरिव्रजाद्गुणगणरंजितप्रजादजादनंतरंलब्धपदस्यभुजंगदेहवे
ण्याःकमलवदनायाश्चकोरनयनायामृगयुधनुर्भ्रुवःसुंदरकुंदकलिकाग्रदत्याबिंबोष्ठ्यागिरिस्तन्यागंभीरह्रदावर्तनाभेरति
स्थूलदृश्यमानानितंबायाःकदलीकांडसाक्थिन्यास्तृणराजिरोमराजेःक्वचिदुद्यद्रविरक्तांशुकायाःक्वचिच्चंद्रप्रभाप्रौढसितव
सनायाविकसिततिलकायाःकिराततर्तिनिहतप्रभूतमतंगजकुंभविनिर्गतनवमुक्ताफलभूषणायाआकरविनिष्पन्नप्रत्यग्र

टीप १ विरूपसर्गोस्यविगतउपसर्गोयस्यतत्तांतां २ ऋषिःशिवः

विविधहीरकादिजात्यमणिपरिष्कृतायाःबहुदृश्यमानकनकायाःसौगंधिकवस्तुपरिभाविता समंतात्प्रदेशायाःपोषितनि-
षादायाःसुव्यक्तसंलक्ष्यमाणर्षभजातेरंबरांतर्गतमध्यमायाःशिक्षाक्षरसमन्वितोपदिष्टपंचमादिपरपुष्टाद्यनुभूयमानषड्
जादिस्वरायालतांग्याअरण्यान्याःपुष्पसमयमभिवीक्ष्ययौवनदर्पभरभरितशरीरकांतिरजनंदनस्यमनसिजचेष्टयामनसि
प्रचुरंविहारकौतुकमुद्भूत् ॥ युवाहिभूत्वाप्रमदाश्रयेणभोग्यानिभोक्तुंयततेनितांतं ॥ वस्तून्यतृप्तोविषमेषुसंस्थःपाप-
र्द्धिमंगीकुरुतेनकोवा ॥ ३६ ॥ अन्येवताराबहवोप्यभूवन्नतेषुजातिःसकलासरूपा ॥ श्रीशेवराहेसतितस्यजातेर्भू-
दारतांपश्यतिचित्रचित्तः ॥ ३७ ॥ सस्वैरौदार्यमासाद्यसनान्मांमंडलाग्रतः ॥ भूदाराणांजीवदानाद्भूदारोरुरु-
चेरुचा ॥ ३८ ॥ खुराग्रविक्षुण्णमहीपरागंपर्यंतवंचत्कदलीशताढ्यं ॥ आयामतःसाध्वसमादधानंरुरोधमार्गंन्यहिन
चराजा ॥ ३९ ॥ पौंडरीकचयवर्धनकामःसन्महावनगतोनृपनागः ॥ दीक्षितोयदभवन्नविचित्रंतन्महामृगहतावपिद
क्षः ॥ ४० ॥ तुरगंशुभंसमधिरुह्यतरस्वीपुरतोविसृत्वरतरान्महिषौघान् ॥ निजघानसायकवरेणनितांतंतुरगाभिघा

टीप १ विषमाणीषवश्चतेषुपक्षेकामे २ स्वरस्यप० स्वर्गस्य ३ भुवि उदाराणां ४ मृगसमूहंप० पंथानं ५ यज्ञविशेषः पुंडरीकाणांव्याघ्राणांप० कमलानांचसमूहःगजानांप० आरण्यपशूनां

तिनइतीवसरुष्टः ॥ ४१ ॥ मेषादिकातिक्रमणेपिदक्षान्नक्षत्रजान्दीप्रतरान्स्वतेजसा ॥ राजाव्यलुंपद्र घुराजसूनुर्नक्ष
त्रनाथोनबभूवयत्ततः ॥ ४२ ॥ रघुराजसूनुभुजतेजसिदीपेनितरांप्रसारिणिसमिद्धमयूखे ॥ गणशोविभिन्नतनवोभृशमु-
ग्धाःशरभाययुःशरभतांप्रमदेन ॥ ४३ ॥ आरण्यिकासुमृगजातिषुयन्मृगेंद्राइंद्रत्वमाप्यनियतंनपरत्रगामि ॥ कुर्व
तिनित्यमशनंकिमिदंहितेषामित्येवतान्याहिनदेषरुषाविशिष्टः ॥ ४४ ॥ पर्णाशिनोजातुफलाशिनोपिक्षंतृंस्तथावर्षमरुत्त
पादेः ॥ वनौकसोप्याशुतिरश्चकारचलाःपरोपद्रुतिकारिणोहि ॥ ४५ ॥ संमवर्तितयासदाजनानांशमितःपालन-
तोबभूवयः ॥ शमितान्विपिनेतयामृगौघान्विरचय्यापिपुनस्तथाविधः ॥ ४६ ॥ पीतेनमत्तामधुनाभवंतःकालार्जितंयन्म
धुनाप्रधानं ॥ स्यन्नेपितस्मिन्कचिदाल्वंतःसाकंप्रियाभिर्मधुपारमंते ॥ ४७ ॥ एवंकारंकारंविविधमृगवधंदर्शंदर्शंगहन
गतंविश्वासेचनकंवस्तुजातंस्वकीयांतनुमिवसद्यस्तनघर्मालंकृतामृतुंसधौविद्यमानांशोभनास्यांसुचारुरोधसोबहुतरपा
थसःसरय्वाःसविधउद्यानभूमिंप्रविवेश ॥ यस्यांचअलिकुलसंकुलाबातविधूतच्छंतच्युतकुसुमव्रातमूलाबकुलाःपरिपाको

टीप १ क्षत्रनाथःक्षत्रियाधीशः प॰ नक्षत्रनाथश्चंद्रःसमकिंतर्हिसूर्यः २ सिंहामृगाशनाइति ३ समवर्तितं प॰ यमत्वंशांतःशंइतः



न्मुखविशालफलकलिताधस्थलारसालायस्यांचक्षीरिकावृक्षोराजादनःफलाध्यक्षतामधिजगाम ॥ यत्रसरःप्रसारिण्यः-
सारिण्योलांगलिनोवृक्षाभूप्रदेशाःकदलीदलसंच्छन्ननभोवकाशतयाऽसूर्यंपश्याराजदाराइवप्रदेशाःकृतमालास्तालतमा
लहिंतालाद्रष्टृणांमनोहराःकोविदारनिकरामुचकुंदसहिताःकुंदाअमंदामंदाराःक्वचित्प्रियंगवोजंबवःसुंदरपर्णाः सप्तपर्णा
लोध्रनीपार्जुननागातिमुक्तकादयस्तुंगैरुद्वेगजननैरप्यनुद्वेगजननैः पूगपूगैःसहितारतांबूलवल्ल्योदिशिदिशिधारागृहाणि
मध्येघनरसदंनामप्रासादंप्रविश्यतौर्यत्रिकंकुर्वतीनांनानादेश्यानांषोडशवर्षदेश्यानांस्वापतेयनिर्वेश्यानांवेश्यानामंजलि-
मुकुलानिदृशागृहीतानीवसंसूचयन्मणिखचितकांचनासनेनिषसाद ॥ तिष्ठंस्तत्रचतुर्दिशंससरसीर्वापीश्चपश्यंस्तथातत्रो
त्पन्नसरोरुहागतबृहद्गंधोत्तमाघ्राणतः ॥ स्मृत्वापाययितुंप्रियाःस्वयमथोपातुंव्यवस्यंस्तदातांताआनयितुंपुरादनुचराना
ज्ञापयद्राघवः ॥ ४८ ॥ तदनुताभिरानीताभिर्वनिताभिःसचषकमंडलीकृतहालापिचंडिलकमंडलुशतावृतंविस्तीर्णम-
णिशिलासनाथंमाधवीलतामंडपंप्रविश्याक्षैःक्रीडितुमारभत ॥ जागरूकैर्व्यवहरन्नपिपातितैरक्षैः क्रीडन्गवाक्षैर्मंदानि-

टीप ८ गंधोत्तमस्यगंधोत्तमायामदिरायाः

लसंचारंसमिच्छन्प्रसन्नांप्रसन्नांभजन्मानिनीमिवचुक्रिकांमानभंगैरिवदंतैःखंडितांकुर्वन्हेलयाफेलाभूतांहालांमहिलाः
पाययंस्ताभिर्विश्राणितांपिबन्गुणोष्णाःसुप्रिया ःसुलभाअनुभवन्कुत्रापिशीतलतामलभमानोमृगयापरिश्रमेणाध्वश्रां
त्याशुष्मिणाग्रीष्मोष्मणाचपरिगृहीतःशीतस्पर्शगुणवत्ताप्रचुरायांसरय्वांरंतुमुद्युक्त ॥ उपकंठमागतवतींदुमती-
जेपदयोर्युगंझटितितस्यपुरस्तात् ॥ वसुभारमुत्धृतमुदारमनर्ध्यंनयतिस्मसज्जनपथैकरतासा ॥ ४९ ॥ राज्ञीनदी
स्वस्थलमागतायानिदर्शयामासपरत्रदृष्टां ॥ किंवासर्वींसंपदमत्रचित्रंसर्वत्रयद्भाग्यभुजःसमानाः ॥ ५० ॥ पदेपदेभं
गगणेनसंयुतानिःश्रीकतांयांतिसदैवजंतवः ॥ सरिद्वरेयंननुतन्मयापियासुश्रीकतांयातिनचित्रमत्रकिं ॥ ५१ ॥ सर्वं
दार्नवपद्मानांपद्मिनीनांप्रवेशनात् ॥ सारवाःपद्मिनीसंघाश्चेलुर्नुस्वाधिकेक्षणात् ॥ ५२ ॥ निम्नंस्थलंगाधमितिप्रद-
र्श्यप्रवेशयन्नालिगिरापिकांचन ॥ आश्लेषबुध्याक्वचिदुज्जहारजलेनिमग्नांप्रमदांजहाससः ॥ ५३ ॥ अतिप्रियांसत्सु-
मनोभिरंचितांसदापुरःस्थामनुकूलवर्तिनीं ॥ विमृश्यधर्मार्द्धेनपुष्पसंयुतामपाससाराश्वितिकिंततःप्रभुः ॥ ५४ ॥ प्र-

टीप १ रुयवयवेषुनवहस्तादीनिप०नूतनानि ८ स्वेदोदकंप०आर्तवं



तिबिंबितांस्वतनुमत्रसपत्नींसमरूपवेषवयसंपरितोमां ॥ त्वद्दिमन्यतेकलुषिताप्रमदेयंवनिताविवेकरहिताहिभवंति
॥ ५५ ॥ एवंचिरंविहृत्यसरयूदुर्वारतरवारिपूरभरात्प्रतीरमुत्तरंतंवसुमतीपतिमनूत्तरंत्योविहाररभसवशेनविपुलजलमे
लननिर्मृष्टकज्जलमृगनाभि विरचितपत्रांकुरस्तनकुंकुमचंदनांगरागतयाताां त्रिवेणीं कृतवत्योधृतविस्त्रस्तकुसुमतयाऽव्य
क्तीकृतांबरसंगतयेवसर्वतोभौमंगुणंप्रकाशयंत्योविहारावसानविरहासहनतयानिर्गलज्जलधारामिषेणरुदतइवविनष्टव-
सुच्छटान्हठाविघटितकुचतटानातिलंपटान्विटान्कुलटाइवभुक्तपूर्वान्पटान्परित्यजंत्योबहुधनसंसिद्धाननुरक्तानन्यान्धार-
यंत्योमदपटुकरटिगमनागृहीतभर्तृशिष्टयोझटितिनृपवधूट्योविहारसंभारप्रत्यानयनाययाष्टीकनिग्रहग्राहितविष्टिकराः
प्रामाणिकवाचइवसित्धांतंशुत्धांतमध्यमध्यगमन् ॥ सचनीरविहारानंतरमपटांतरमखेटकपटुराखेटककटुरचेटकःस-
घोटकःसखेटकःसर्ष्टिर्धीर्ध्वनपृष्ठनिबद्धतूणःपुरतःकरधृताटनीसमाटीकितधनुर्गुणःस्वकीयपुटभेदनोपकंठतटिनीतटानिक-
टविकटाटवींपर्यटनपरोविज्ञानसमस्तमृगयाप्रकारोपिशब्दवेत्धृमूर्धन्यतामनुबुभूषुर्विविधमृगवधसत्रेसमतीतिगणरात्रेप्रा

प्तासुवर्षासु अपररात्रेनिभृतानिभृतेचिररात्रायेतस्ततःपरिभ्रमन्कस्यचिज्जलहर्तुस्तापसस्यकुंभभरणशब्दमाकर्ण्यकुंभिबु-
ध्याशरंचिक्षेप॥तदनुस्वबाणस्येवतस्यवाण्याःव्यक्तशब्दवेधितांद्दयक्षतकारिर्णींसंलक्षयन्टंकारिचापविनिर्गतझंकारि
शरसंचारपरासूकृततापससूनुराशरइवसाहसकारिणधिगस्त्वसमीक्ष्यकारिणंमामितिचिंतयागलितशरासनवरउपकंठमा
गतप्राणस्यश्रावणस्यचरणयोरुपकंठसंयतपाटच्चरइवानेडमूकइवाविज्ञातदेशभाषोविदेश्यइवचाक्षुषमात्रफलकोराजाद-
शरथोवातिष्ठत ॥ राजानंतत्रसंवीक्ष्यपुंडरीकानिभोमुनः॥ श्रावणोनितरांम्लायन्नुवाचविशिखार्दितः॥ ५६ ॥ नद्यांगतः
सच्छरलाभलोभतःशांतःपितृभ्यांसहितोभवाम्यहं ॥ इत्यासहेतुःप्रथमोपसर्जनच्युताद्यवर्णोभवमद्यमानव ॥ ५७ ॥
राजन्नहंतापसवर्यजन्माफलंसमश्नामिचतापसंशुभं ॥ तदंशभागप्यवधीद्भवान्मांक्रूरस्यकिंवापकृतंतपस्विभिः॥ ५८॥ म
त्कर्मणापितृभ्यांमेभूवंकर्णतांगतः॥ त्वंकर्मणात्रयाणांनःशोकेभूयस्तथाविधः॥ ५९ ॥ उंभंतमंभोनिजघानकुंभिनंमुनेःसु
तंतंजलकांक्षिमेधया ॥ जज्ञेयतस्तज्जलकांक्षिकुंभिनंसंकल्पासिद्धिःसमभूद्धरापतेः ॥ ६० ॥ इतस्ततःसंचरकर्मका-

टीप ८ संकरनातिमत्वसाधकतमत्वं ॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥

रिणेशर्रार्थिनेदान्मुनिसूनवेशरं ॥ सदानकृत्याकृतहस्तवर्णनोरघुप्ररोहःसकलोपिताद्दशः ॥ ६१ ॥ कर्णंविध्यतिवाक्श
रेणपिशुनःसंभावयन्नन्यथासंस्थांजातुनिगूहितात्मकतयानेकान्विहंतिक्षणात् ॥ एवंत्वंपृथिवीपतेसमकरोरेकस्यभेदंत्वद
स्तस्माद्द्यपरासुकःसपितृकोमुंचाशुविद्यामिमां॥ ६२॥ नजातुकश्चिद्भवतीहघातुकोयोनानुभूष्णुःस्वकृतेनपातुकः॥ तत्पा
तुशंभुर्मधुकैठभाहितोयोयातुजातेर्नियतंविभेदिता॥ ६३॥ अचक्षुषैपश्यनिजेनचक्षुषापिपासितौतर्पयशीतवारिणा॥ नत्वां
मदीयौदहतांसमुद्भवौद्दश्येयमस्त्येकपदीमदाश्रमे॥ ६४॥ ततश्चपरलोकप्रयाणप्रवणप्राणस्यश्रावणस्यसकरुणवचनाक
र्णनतोनितांततांतस्वांतःकिमितोविधेयमितिचिंतयानस्तदुपदेशेनतदयनंनिश्चिन्वानःस्वयशोमलिनतादायिनास्वागसा-
विवशोविधृतनिर्मलांभःपरिपूरितकलशःशनैःशनैस्तापसपरिसरंगच्छन्सलिलानयनागतसुतानागतिनिमित्तबहुतरतर्क
तजल्पंशृण्वन्दंपत्योःपादमूलंभीतभीतोजराजसुतउपससार॥ श्रुत्वापदध्वनिमसावपिपारिकांक्षीतृष्णापदध्ववितर्तिर्वि-
रतेत्यवोचत्॥ आगच्छकच्छजलमच्छतरंप्रयच्छपृच्छाशुतृप्तिमापिनौसुखमास्वपुत्र ॥ ६५ ॥ जात्यादेहंक्षात्रमाद्रुर्मदीयं

टीप ८ नलंबाणं ॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥

कृत्यातस्मिन्नर्थशून्यत्वमस्ति ॥ सृत्यागंतात्वत्सुतस्यास्मिहंताकृत्यार्हस्येत्याहराजामुनिंतं ॥६६ ॥ धृत्वादशस्यंदनजंतु
विग्रहंसूनुंमदीयंन्यखदोनिरागसं ॥ इतोविनिष्क्रम्यतुरामपूर्वकान्पश्यन्नंचस्वस्थलमाप्स्यसिप्रभो ॥६७॥ यथामदी
याद्यदशातवांत्यातथाभवित्रीपरमस्तिभेदः ॥ स्वस्थंतुभूस्थस्तनयंगुणाढ्यंविलोकयेर्मद्विपरीतगत्या ॥६८॥ क्षुण्णांकुली
नैःसुतसूनुलोकांगछाद्यशीघ्रंगतिमिष्टदोस्यतः ॥ पितःसमातःकृतसोमलोकामागछदत्तांगतिमेवकर्मणा ॥६९॥ सदास-
तांमार्गनिविष्टलोचनःपित्रोःसपर्याकरणातिपावितः ॥ यश्छत्रिणाद्याशुहतःसुपत्रिणाजगामयोग्यांगतिमेवसत्रिणां ॥
॥७०॥ लोकेषुसर्वैतनयास्वपित्रोर्दिशंतिशास्त्रैकदृशाशुभांगतिं ॥ चित्रंददिदेशात्रगतोपिसाक्षात्पुत्रोमुनेरित्यवदाद्दिविस्थि
तः ॥७१॥ अंतोमृगव्येप्रचुरोस्तिजंतोःप्रांतेस्यपाकःप्रभवेदशांतः ॥ तांतोव्द्दीत्येवसभूमिकांतःकांतांपुरंचाध्यगमन्निं-
शांते ॥७२॥ शुद्धांतनिष्ठःसकृतांतभीरुःस्वांतेतिखिन्नोरमयन्नभीरूः ॥ ऋतेसुमंत्रंकथमापदंतमीयादितिव्याकुलितोब
भूव ॥ ७३ ॥ तदनंतरमंतःपुरचरवर्षवरनिकरविनिवेदितविज्ञातवनचरनरपतिवरविहितकृत्यःकृत्यवित्तयावित्तसर्वतंत्रः





सुमंत्रःक्षणेनतच्चरणयोरुपांतमुपेत्यइयत्यापत्याभिहतोस्मिकथंनियत्याप्रेरितयात्याभवितव्यमित्युपपत्यायुक्तमभिध-
त्स्वेतिपत्यानियुक्तऐतिह्येनमनसिकिंचिद्यापृत्यपुत्रर्णेनक्षीणोसिशृणुवर्णाधिष्ठात्रींमातेसुमनसोमनसोवृथान्यथाकथाभ-
वत्वित्युक्त्वाशांताकुटुंबिनंविभांडकस्यपुत्रंपुत्रभांडंप्रचलतिकांडेउपानीयतंद्वारीकृत्यपुत्रलाभंलभस्व॥ जयेतिसर्वैरनुलो
ममुक्तोनजातुकश्चित्प्रतिलोममाह॥ आघ्रायमेध्याश्ववपासुगंधंसांजिघ्रमूर्ध्नोपिसदासुतानां॥७४॥ इतिश्रीमद्दांतकुलावतं-
सजगन्नाथात्मजलक्ष्मणविरचिताभिनवरामायणचंप्वांप्रथमस्तबकः ॥ ७५ ॥ विभांडकापत्यमुपानयस्वयजाश्वमेधेनलभ
स्वपुत्रान् ॥ वैधात्रमंत्रेणसमंब्रवीषिसुमंत्रकिंचात्रनिदर्शनंते ॥ १ ॥ असारसंसारकृतप्रचारविकारकृन्मारनिकारधीरः ॥
सनत्कुमारोपिपुरापुराणोयद्व्याजहाराहरपारयस्वं ॥२॥ कथंकथयतत्वज्ञानमननाध्वनीनेनप्रपंचजातसर्वपथीनमतिना
सनत्कुमारसुमतिनामदात्मनीनंवचनरचनाविषयीकृतमिति ॥ चंगस्तपःकर्तुमथर्ष्यशृंगःशृंगोत्तमांगोमुनिशृंगमार्यः
॥ अंगेषुराजाभवितास्यभंगःसंगायतंगास्यतिविप्रनुन्नः ॥ दातासदातोत्यवदातकीर्तिःसांगोप्यनंगाधिकरम्यमूर्तिः ॥ ३

रातिपातोज्झितभूतलार्तिःशांतायदातासविमृश्यशांतां ॥३॥ योग्राम्यधर्मंनहिजातुवेदस्त्रीपुंसभेदंचनवेदवेदं ॥ यःसत्कृ
तोवारवधूटिकाभिःप्रवंचयित्वापितरंतदीयं ॥४॥ कुतुकंत्वदादिवर्ततेममेदंपृथुकोरण्यचरस्तपस्विनः ॥ सकथंगणिकाभि
राहृतःसन्वशगोभूदितिवर्णयाधुना॥५॥अवधेहिविधिहितत्तथाधरणीनायकमास्मसंधेङ्मनसिधरणिगीर्वाणनुन्नाःपणीकृ
तप्राणाःवर्णनीयलावण्याआकर्णनीयगानगुणाःक्वणत्किंकिणीकिणीकृतचरणाअनणुरणरणकप्रतिक्षणसंचरणपरिपूर्णाः
परिगृहितभूरिदुर्वर्णसुवर्णमणिद्रविणाःसर्वांगीणरत्नकनकाभरणाःकरणीयार्णवपारीणांतः करणाबहुविधकरणविचक्ष-
णाःसंचारिणःकरिणइवतरुणवाररमणीगणाःस्वशरणान्यपहायसरणौपरिश्रमेणविभ्रमेणक्रमेणारण्यककाश्यपपर्णशा-
लायाअभ्यर्णमवश्यकरणीयराजनिदेशाःकृतनिवेशाबभूवुः ॥ धुरंवहंत्योवनिताजनानांसंहत्यकश्यंमधुरंधयंत्यः ॥
गायंत्यउच्चैर्विधिनोपनीतंव्यलोभयंस्ताभृशमृष्यशृंगं ॥ सग्राम्यलोकव्यवहारहीनस्ताश्चाश्रमद्वारमथोनिनाय ॥ पा
द्यादिपूजामकृतापितासांजजक्षतद्दत्तफलान्नजातं ॥७॥ भीतास्ततस्ताव्यपदिश्यकाल्यंव्रतादितस्याश्रमतोनिरीयुः ॥ अ ॥८॥

न्हिद्वितीयेपितरिप्रयातेजगाममयत्रासतसोपिमुग्धः ॥ ८ ॥ तथाविधंवीक्ष्यतमृष्यशृंगमूचुर्युवत्यःप्रियतावशेन ॥ एह्या
श्रमंसौम्ययदीप्सितंतेफलादिसंप्राप्नुहितत्रयावत् ॥ ९ ॥ वन्यत्वाद्वनिताप्रियोसितस्मात्संश्रुणुष्वादरादस्मदीयाश्रमस्थं
विलोकयह्यस्तनफलभोगःप्रीणातिचेच्छ्वस्तनफलभोगोपिवरीयसेश्रेयसेभवेदतोवर्णयामोगिरीणांमुपरिसकुसुमवर्षुकव-
नतिलकमंडलंसधनुर्द्विजराजःसमुक्तावंशांकुराःसुशोभानितिलकुसुमानिअबहिर्वासिनोहसिनशुक्करकंवसनंवसानाद्विजाः
पचेलिमानिबिंबीफलानिअब्जाधोप्यब्जास्थितिर्गभीरतरोन्हदस्तत्समंतात्पुलिनोच्चयःकिंचकदलीकांडोपगूढानिपिप्पल
दलानिबदराणिबिल्वानिआमलकानिनारिकेलानिचस्थलचराणिपद्मानिएवंफलानांदलनांकुसुमानांयथातृप्यसितथास-
र्वंभविष्यतिनचसततंवनितात्यागःकेवलमेकमाश्रमंसमावर्त्यद्वितीयाश्रमस्यांगीकारेणसर्वस्याभुवोरसवतीभवनेनेतरेषा-
माश्रमिणामन्नदत्वेनजीवितसर्वस्वदातृत्वेनालंकृतिमत्तांप्रदर्श्यशांतयावनितयासाहित्यमपिसेत्स्यतीतिब्रुवत्यःपदेपदेत-
मनुनयंत्योवारयुवत्योंगदेशसंगतावग्रहनिग्रहार्थंतत्सीमानंसमानमानैषुः ॥ १७ ॥ जहर्षसर्वःपथिजीवलोकोववर्षवर्षंच

टीप १ वनवत्वात् १ पर्यायोक्त्याद्योयं ॥ छ् । ॥ छ् ॥ ॥ छ् ॥ ॥ छ् ॥ ॥ छ् ॥ ॥ छ् ॥ ॥ छ् ॥

वृषायतोतः ॥ चकर्षपर्षद्गतबुद्धिशक्तिंप्रकर्षयंस्तेजऋषिःस्वकीयं ॥ १० ॥ दत्वाद्यवर्णायसपाद्यमर्घ्यमर्घेणहनामददात्त्र
शांतां ॥ शांतांप्रशांत्याअपितंक्रमेणनिवासयामाससगृहेसुखेन ॥ ११ ॥ किंचापरंनिर्वचनंवैधात्रवचनेरोमपादाभिरव्येनां
गराजेनसख्यासखिमतांधुरमारोपितोदशरथःसुरूयन्स्वसंतानलाभार्थंक्रतुमश्वमेधमाहर्तुमृत्विजंशांतापतिमृषिमृषीणाम्
षभमृष्यश्रृंगमभियाचितःसचंपापतिर्दास्यातिप्राप्स्यतिचचतुरश्चतुरःपुत्रानित्येतित्वंकृतार्थयन्कृतार्थोभव ॥ १८ ॥ ततः
सराजार्षिवरोमहर्षिंवसिष्ठमामंत्र्ययर्यौसखायं ॥ सचांचितस्तेनददौऋषिंतंपत्न्यायुतंस्वंपुरमानिनाय ॥ १२ ॥ गंवाधि
पोहंक्रतुमश्वमेधंवत्संचदोग्धारमृषिंविधायच ॥ प्राप्स्यामिदोहंसवनेसुतारव्यंप्रोत्साह्यकामंसुरभिंशनैःशनैः ॥ १३ ॥
चित्रामथारभ्यमधोपवित्रांबित्रासयंच्छत्रुसमूहमश्वं ॥ गोत्रारिमुद्दिश्यचसंप्रसार्यपुत्रार्थमंगैरयजत्तदीयैः ॥ १४ ॥ नत
त्प्रधानंधनमर्थिसान्नयन्नचार्थिनस्तेनददुर्युआशिषः ॥ नचाशिषोयानचमंत्रपूर्वकानचापिमंत्रोर्थफलोनराजनि ॥ १५ ॥ ए
कावलींधारयतिस्मकंठेनैकावलींभोजयतिस्मयज्ञे ॥ आवापकंचारयतिस्महस्तेनावापकंकिंन्वितिचावलोके ॥ १६ ॥ ए०

तस्मिन्नवसरेऽसकृदकृशवचःकशाभिहताःअंतर्हितादुर्दशापाशसितावविशास्त्रिदशाआश्वमेधीयंहविःप्राइनंतोजीवलोका
न्निर्वास्यंप्रशास्यंदशास्यंवैवस्वतास्पनिवास्यमाशासमानालोकेशंलोकेशंप्रसारायितुंकृतासनंपायससरिदधीश्वरसदेशनि
वासिनंजलशायिनंसमयापायसासारप्रतीकाशैर्विसारिभिरनपभ्रंशैर्वचसांबिसरैर्विज्ञापयामासुः ॥ १९ ॥ त्राणायतेषां
जगतांत्रयाणांप्राणाधिकानांभवतांकृपाणः ॥ शाणासितश्चेत्कुणपाशनेंद्रोवृणीमहेकिंबतयुष्मदादेः ॥ १७ ॥ त्राणाययु-
ष्मासुजगत्त्रयस्यप्राणाधिकस्यापिभवेत्कृपाणः ॥ शाणासितश्चेत्कुणपाशनेंद्रोनार्णायसीनोभवितानयांच्या ॥ १८ ॥ सं
गत्यसंगत्यलतामृगीभिऋक्षीभिरद्धाफलभोजिनोये ॥ वनौकसःसंतिजितारिवर्गाःपरंपदंतेनियतंभजंते ॥ १९ ॥ हंतुंद
क्षोनानलःस्याद्दशास्यंहेत्यायुक्तोनानिलोप्येवमेव ॥ सेलत्वंचावाप्यकामंनलत्वंराज्ञोगेहेजन्मनातंविहन्याः ॥ २० ॥ गद्य।
तदनंतरंस्वस्वशासनानुरूपंविधातुंस्वागारंगतेषुनिर्जरवरेणसहामरेषुइंधनसमिंधनसमुद्गतज्वालावलीवलयितात्समुज्व-
लादनलात्समुद्भूतोनल्पाकल्पोमध्यान्हरविकल्पोबालतालनीलनीलःकीलालतुल्यसुचेलकोभेरीगभीररवःकेसरिविक्र-

मोगिरिवराकारःकेसरिकेसरश्मश्रुशिरोरुहःकरगृहीतराजत्पायसराजतपात्रःकोपिपुरुषवरोविदितकर्ममर्मभिःषट्कर्म-
भिर्धर्मेणकर्मकर्तुः कर्मसाक्षिकुलोद्भवस्यतेशर्मंकालोदीयमानंपायसंपत्नीभ्योदत्स्वलभस्वपुत्रानित्युक्त्वासमाधायवसुधा
पतिंक्षणेनांतर्धानंजगाम॥ २० ॥ पायंपायंपायसंभर्तृदत्तंभर्त्रेदत्तंपुंवेरणाघियज्ञं ॥ भागीभूतंभागधेयेनराज्ञ्योविष्णोरं
शांस्तादधुर्गर्भभूतान् ॥ २१ ॥ आदायहस्तेसुरभिःसखीवयाचुंबिताप्रेमरसेनमृद्वी ॥ साकेत्ययोध्यापातिनानुयुक्तामृ
त्सेत्यवोचन्नृपातिंरमण्यः॥२२॥ अतुलंद्दशासमवलोक्यमहंरघुराजजन्मकृतमद्यशनिः ॥ द्रुतमारुरोहकथमेषतुलांनहि
मंदतामिदमृतेहिभवेत्॥ २३ ॥ शुक्रस्तदापिस्वयमेकचक्षुःशुभेक्षणंमीनमथावलंब्य ॥ रामस्यजन्मोत्सवदर्शनार्थम-
भ्यागतःकिंनुसमुन्नतंतं ॥ २४ ॥ भौमःकुजःसन्जलजंनिजोच्चंसमास्थितोयन्मकरंतदेतत् ॥ श्रीरामजन्मोत्सवदर्शना
र्थंयःसंभ्रमस्तेनकृतंविभाति ॥ २५ ॥ कथंद्विजस्यापिगुरोःसुराणांगवाधिरोहःप्रियतामुपागात् ॥ इतिप्रमाष्टुंजनुरुद्भवार्थं
कर्कंश्रितःकिंन्वजनस्यतुंगं ॥२६॥ शुचेःस्वशुष्मोत्तमपालकस्यरूपेणतस्यापितमीप्रसक्तं ॥ द्रष्टुंक्षणंस्वीकुरुतेस्मवह्निंवि

टीप १ अग्निवाहंमेषं ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥



ज्ञायतुंगंकिमुसप्तसप्तिः ॥ २७ ॥ आदित्यवंशोद्भवभूपतीनांसंपद्विवृत्स्वाभविताय दीशः॥ अन्वग्रहीद्यत्कुलमद्यतस्मात्त्वं-
द्रःस्वगेहांतरगोबभूव ॥ २८ ॥ अजनेरप्रमेयस्यदेवदेवस्यचक्रिणः ॥ चैत्रसंपद्विवृत्स्वाभूच्चैत्रेमासिजनेर्विभोः ॥ २९ ॥ च
कारानवमंलोकंनवमेपितिथौजनेः॥ पुनर्वस्वोरपिश्रीशःपुनर्वसुसमृद्धितः ॥३०॥ यस्याश्वःप्रभवतिमेदिनीतदीयेत्येषोक्तिर्भु
विवितथायथानचातः ॥ भूजानीभवितुमनाःसकर्कयोगेसक्तोभूद्यदिजनुषेतिकिंनयुक्तं ॥३१॥ लोपंनिनीषुर्जगतामरिष्टंरा
मोजगत्त्राणकृतांवरिष्ठः॥ व्हसिष्ठमार्गेचरतांदविष्ठःकौसल्ययासाविमुदाध्यरिष्टं ॥३२ ॥ गंधर्वादिविभुविसद्गुणोपकृष्टा
स्तारेणस्वरकरणेनतेविरेणुः ॥ नागास्तेभुविचभुवस्तलेशिरांसिव्याधुन्वंस्तदनुजनुःक्षणेतदीये ॥३३ ॥ कलंजगुःफलंददुः
प्रयत्नतःपरस्परंह्यदुर्दलान्यथांशुकांचलंचचक्रुरंबरे॥ दधुःपरिष्क्रियाजनाःशुभप्रियाःसुचेलकानमूल्यकांच्छुभाशिषोद्विजा
दयःसमावदन् ॥३४॥ जज्ञेसुखंकैकयराजपुत्र्याअन्हिद्वितीयेभरतःप्रसन्नधीः ॥ पुष्यस्यमीनस्यधियोगिरश्चपत्यौजनौको
नभवेत्प्रसन्नधीः ॥३५॥ श्रीमान्छेषोथामरैःप्रोच्यतेचेत्कोशीभूतैरन्वहंसर्गयोगात् ॥ श्रीमंतंतंलक्ष्मणंप्राहचैकःकोशीभूतस्त

१ उत्तमं २ सिताश्व ३ बिष ४ लक्ष्मीवंतं ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

त्रकिंचित्रमस्ति॥ ३६॥ शत्रुघ्नोभवदपिलक्ष्मणःसभाग्याद्वीर्येणाभवदथलक्ष्मणःसचापि॥ भागाद्वादभिजनतोगुणाच्चशी
लाद्रूपाद्वायमजननात्समौन्यभातां॥ ३७॥ कुतःसुमित्राजनयत्सुपुत्रौसापीजितामित्रवरावथर्क्षे ॥ कर्केभवेतामपिकार्कि
चक्रिणौकदापिकः स्वंव्यपहायतिष्ठेत्॥ ३८ ॥क्षणंगुणंपुण्यभरंमहीध्रंकृत्वामथित्वारभसार्णवंसः ॥ मणीन्प्रयत्नाच्चतु
रश्चिरत्नान्निष्कासयामासनृपोपिनूत्नान्॥३९॥ द्वार्याहतादुंदुभयोविनेदुरनाहताश्चत्रिदिवेपिनेदुः॥ परस्परंतत्रजनाः
प्रणेदूरामादिजन्मोत्सवतःप्रसेदुः॥ ४०॥ नादेयमप्यासनचित्रमत्रदेयंनदेयंवसुकिंनृपस्य ॥ अयाचितंयच्चविधेर्विरु
द्धंयदर्थिनोनीप्सितमप्यभूच्च॥ ४१॥ रामेतिज्यायसश्चक्रेभरतेतिकनीयसः ॥ ततोलक्ष्मणशत्रुघ्नावितिनामानितद्गुरुः
॥ ४२ ॥ गुरुर्वसिष्ठःपरमेष्ठिनःसुतोनाम्नांविधिज्ञःसचकारसंस्क्रियां ॥ सुश्रेयसेतानिभवंतुसन्निधावसान्निधानेप्रभवंतुगा
यत्रां॥ ४३॥ यारत्नगर्भांसमवेक्ष्यपत्न्यःकालाद्बहोरतस्यभुवंसपत्नीं ॥ तथाविधाआसतदद्वयरत्नाःपश्चात्ततःश्रेष्ठत
राबभूबुः॥ ४४॥ त्रैवर्णिकोयद्विधिनोपयुक्तेयदायदोंकारमयंन्यवादीत्॥ नचित्रमेतत्परमस्तिचित्रंनीचोपिसोंकारमुवा

१ अश्ववंतो २ राष्ट्रवंतो ३ इत्सत्र ॥ छ् ॥ ॥ छ् ॥ ॥ छ् ॥ ॥ छ ॥ छ् ॥ ॥ छ् ॥ ॥ छ् ॥

चतत्र ॥ ४५॥ पुत्रांस्तदोत्तानशयान्समीक्ष्यदशस्यवस्थापरिनिष्ठितोपि ॥ चित्रंसदानंदनिमग्नचेताराजापिचोत्तानशं
योबभूव॥ ४६ ॥गद्य॥ तदनुक्रमेणजगत्त्रयीनिकारणपरायणस्यरावणस्यविशरणार्थंजगच्छरणार्थंत्वमवतीर्णोसीतिवद
तामिवापरोक्षांणागीर्वाणानांवचनांगीकारायहुंकुर्वनामासरप्रसरनिर्भरपरिम्लानांभगवतींवसुंधरादेवींमाश्वसनालिंगनाये
वन्युब्जीभवतामसुरपरिपीडितःकियान्प्रदेशइतिभुवंमातुमुरसाप्रसरतांपुरस्ताल्लघूकरणीयाःशत्रुगणाइतिस्वशरीरतुल-
नामभ्यस्यतामिवरिंखतांभारभरिताभूरितिशनैःशनैःपदानिकुर्वतामर्द्धार्द्धाक्षरव्यंजितस्वामिप्रायरंजितजनानांनिजदेश--
भाषिकाक्षरश्रवणेनैवतत्रसर्वज्ञतांप्रसारयतांशिशुक्रीडनपारीणानांग्रामायव्ययगणनाचणानामक्षरचणानांविधिवदुपनी
तानांचतुर्दशसुविद्यासुनिष्णातानांचतुःषष्टिकलाःप्रकालयतांरणकर्मणिवैशारद्यंप्रदर्शयतांस्वशुश्रूषणेपिनिपुणानांस्वतः
परतोपिप्रख्यातगुणप्रचरणानांचतुर्णांपुत्राणांवयोविषरूपौदार्यसौजन्यान्यवलोक्यराजादशरथःप्रतिदिनमानंदपारावारे
ममज्ज ॥ २१ ॥ नव्योप्यसव्यस्तमसौमृगव्येनाभून्नवापार्ष्णिचरोपिचास ॥ गव्यानिभव्यानिविनासतेनसौमित्रिरं

गीकुरुतेंकथंवा ॥ ४७ ॥ परविदारविचारकृतादरान्दशरथःशरतःसमराजिरे ॥ अविरतंसनिशाम्यवरान्सुतानकृतदारकृ
तौपरमादरं ॥४८॥ तदात्वएवतेजसाभालंदनस्तपसासनंदनोयशसाज्योत्स्नामंदिरंचंदिरःपदेपदेछंदतोजनवृंदैःकृतपा
दाभिवंदनस्तत्तद्गुणिसंदर्शनकृताभिनंदनोगाधिराजनंदनःसंदानितांधकारिरविंदबांधवेदिनकरत्वसंधासंधानमारूढेखंडि-
तदेवारिचक्रेणचक्रेणभक्तसंदोहनंदकेननंदकेनसदाशयसख्याकौमोदक्यास्वकीयदीप्तितुलितगंगांबुनाकंबुनापद्मासद्म-
नापद्मेनशरकृतशात्रवारुषाशार्ङ्गधनुषापरिमंडितकरदंडचंडकरकरनिर्मलकिरीटपरिशोभितोत्तमांगंपीतांतरीयोत्तरासंगं-
काश्मीरतिलकितभालंनवोद्गततालसालनीलस्वदेहभासादूग्धोदन्वंतमपिकालिंदीतन्वंतंभगवंतममंदानंदकंदंमुकुंदंचतु
र्थ्यादशस्यंदनगृहेषुकृतावतारंद्रष्टुंस्वश्वःश्रेयसायस्वाश्रमेन्नंतुमाकंदमकरंदसंदोहंमिलिंदइवेसवकजनानांवृंदारकनंदनी
यमहिमाहरिचंदनइवतदात्वेआयत्यांराजमनोरथान्पुरयितुंराजप्रतीहारालिंदमभ्याजगाम ॥ २२ ॥ विवाहचिंतामितिसर्व
लोकःकरोतिवध्वाश्चवरस्ययुक्तं ॥ अयंविवोहस्यसगाधिपुत्रःक्षिप्रंगृहंतस्यचतांमसमागात् ॥ ४९ ॥ आयोध्यकःसर्वजन

विद्योः ॥ छ् ॥ छ् ॥ छ् । छ् । छ् ।



स्तदानींसंभ्रांतआसीदवलोक्यतंच॥स्थानाद्द्रुतःसंचलनंनचित्रंचित्रंप्रतीहारवरस्तथेति॥५०॥ द्वाराध्यक्षानवोचत्कथयतस
दनंक्ष्माभृतःसंप्रविश्यप्राप्तोगाधेस्तनूजःसततकृततपादर्शनार्थीतवेति॥ श्रुत्वावाक्यंतदीयंदशरथनृपतिःकारयित्वार्घ्यपा
द्येअग्रेकृत्वापुरोधोवरमपिमुनिनाप्रापकक्ष्यांसमेतुं॥५१॥ब्रह्मन्स्वागतमस्तुगाधितनयस्निग्धस्यतेदर्शनादास्तेमेसुदिना
हमद्ययमपिचस्वांतंतथाचेष्टते ॥ यज्ञेमेविततेविभांडकसुतोमांधुर्यतांपुत्रिणामध्यारोपयदेवनूनमितरत्पूर्णंविधातुंभवान्
॥ ५२ ॥ पूजांसमर्घामपिकारयित्वापुरोधसासौनृपतिःकरेण ॥ करंसमालंब्यसभोदरंतंनीत्वासमावेशयदासनेस्वे॥५३
कृत्वांजलिंतत्पुरतस्तुतिष्ठन्मुमोदराजाप्रणयान्वितांतं॥वसिष्ठजाबालिमुखेषुसत्सुविशिष्टदृष्टिंविनिधायतस्मिन् ॥५४॥
कोशेजानपदेपुरेपिचसुहृद्वर्गेतथाबांधवेष्वास्तेकच्चिदनामयंचरिपवःकच्चिज्जिताःसन्नताः ॥ कच्चित्संततिसुरार्चनादिसत-
तंदैवंतथामानुषंकिंवात्वय्यनुयोगएषकृतिनाकार्योवसिष्ठाश्रवे ॥५५ ॥ भवान्कार्यार्थीसन्ममसदनमायातइतिचेदसावूहो
नेष्टोभवतितपसःसंचयवशात् ॥ नवीनंब्रह्मांडंविरचयितुमास्तेचतुरताभवेदिष्टंमौनंकृतसुकृतमाहात्म्यवचने॥५६॥ स्व

गस्थेत्वयिदिव्यगायनकृतंश्रुत्वापदानोंध्दतंआवत्कंरुचिरंप्रबंधममराधीशःपरंतत्क्षणे ॥ संधत्तेमनसाधिकंभयभरंजित्वा
समस्तासुरान्राजाभूदयमासनार्धभुगपीत्येवंकथंवाभवेत् ॥ ५७॥ आस्माकःकुलजस्त्रिशंकुरितियोनाम्नाक्षमेशोभुविरूया
तस्तस्यमनोभवद्घनतरंयायांसकायोदिवं ॥ वासिष्ठैर्मुनिभिर्निरस्तइतियःसोपित्वयांगीकृतःप्रत्यूहायदिवस्पतिःसमुदय
न्किंनत्वयास्तंभितः ॥ ५८ ॥ यस्त्वंपृथ्वीपतिःसन्नमरपतिपुरीमाशुगत्वातदानींतेनाहूतःसुरारीन्रभसयुतशरव्रातकृत्ता
न्विधाय ॥ नाभूःस्वर्णायकःकिंकथयनतुवयंकारणंत्वांवदामःशक्रस्याधेर्निदानंजगतिनहियथास्यामकिंवान्यदस्ति ॥५९॥
आस्माकोयायजूकोगृहभुविसुरभिंगोष्ठदेशेनिबध्दांकृत्वाकामान्समस्तानापिबतबहुधादोग्धिनैतद्विचित्रं ॥ चित्रंतांक्लेशयि
त्वाप्रखरतरतपोव्रातनिष्टप्तदेहःसर्वान्दोग्धीहकामान्यदुपरिचभवान्मार्दवाक्रांतचेताः ॥६० ॥ यस्त्वंराजन्समंताद्भवस
कलरिपूच्छेददीक्षाव्रताढ्यःक्रौर्यंजानासिचित्तेनचभवसिघृणावान्सदाचासिभूप ॥ नादेयंतेपिचास्तेतनुमपिददतेराघवाः
किंतनूजंवर्ण्यंकिंवात्वदीयंविरमरघुकुलोद्गीतकीर्तेनृवीर ॥६१॥ अहरहरभिवृद्धिंप्राप्तुमिच्छन्नहंनोअकरवमपिकर्मप्रेष्ठम



ध्दागरिष्ठं ॥ अकरवमितिवक्तुंप्राप्तएषोस्तिकालःकिमितिभवतियस्मात्तावकंदर्शनंमे ॥६२ ॥ वरीयसोविप्रवरस्यलाभे-
महीयतेक्षत्रवरःसतेन ॥ ओजायतेताद्धितयंप्रसक्तंतवागमेगाधिसुताधुनामे ॥६३॥ कामंनजानेहमपित्रकामंरूपेणकामं
समवाप्यरामं ॥ तथापिकामंकरवाणिकंतेत्वंब्रूहियस्मादसिपात्रमुच्चैः ॥६४॥ इतिनृपवचनंतत्कौशिकःसंनिशम्यप्रसभर
भसपारावारमग्नःकथंतत् ॥ दशरथनृपयत्तेकामपूरोभवेयंलपितमितिहियस्मात्कौशिकस्यासिपक्षः ॥ ६५ ॥ भाव्योद
शाहान्ममसप्ततंतुस्तस्यास्तुगोप्तातवकुल्यतंतुः ॥ रूपेणतुल्योनहियस्यकंतुस्तर्षाःप्रियास्तेसफलाभवंतु ॥ ६६ ॥
झटितिनमतिकामोयंसमावाप्यराजन्वनकृतवसतीनामेषआस्तेदुरापः ॥ कुरुनगरनिवासेमानसंत्वंगभीरंभवतुत
वशिवंतंदेहिमह्यंकृपालो ॥ ६७ ॥ यत्सर्ववेदारघुनामभूपोद्रव्येणरिक्तंसदनंनिरीक्ष्य ॥ कौत्सायलोकांतरतोवतार्य
ददौधनंयुक्तमिदंत्वदुक्तं ॥ ६८ ॥ सुबाहुमारीचमुखाहिराक्षसायज्ञेषुविघ्नंनियमेनकुर्वते ॥ यमस्यनिघ्नाःप्रभवंतुसत्वरंस्तु
ग्नाअतस्त्वांरभसात्समागमं ॥ ६९ ॥ मयात्रदेयोभवितापिशापोभवेयुरेतेनगतासवस्ते ॥ सर्वैपरंयज्ञियदीक्षितत्वादु

त्त्रष्टुमर्होनिभवामिराजन् ॥ ७० ॥ यद्येषभूयान्ममदीक्षितस्यवशेसुतस्तेनृपतेवरीयान् ॥ श्रेयोभवेदस्यजगत्प्रतीतमग्रे
स्फुटंस्यान्ममवाक्यमीदृक् ॥ ७१॥ यदितेवसिष्ठमुनिमंत्रिमुखास्त्वांकथयंतिदेहिसुतमात्मजवर्यं ॥ उदितानुरूपमुररीकु
रुतेषामपिशोकसांद्रवतुनोमनईषत् ॥७२॥ मुनिनासमीरितमिदंवचनंनरनाथचेतसिपपातभृशं ॥ अतितीक्ष्णकुंतवदसौ
चतदानिजसंस्थितेर्भुविमुमोहतथा ॥ ७३ ॥ ऊनषोडशशरन्ममरामोनैववेत्तिशरचालनविद्यां ॥ यःपरानपिविलोक्यबि
भीयात्किंकरिष्यसितमद्यगृहीत्वा ॥ ७४ ॥ यदियज्ञरक्षणविधौतवयत्नःकृतसंगरोभटगणोस्तिचिरत्नः ॥ नचनेतुमर्ह
सितरांसुतरत्नंतदृतेतनूर्ममनतिष्ठतिविद्वन् ॥ ७५॥ स्वरूपतस्त्वंमिहिरन्नमन्यसेयद्वन्हरंचाश्रयसेसिकौशिकः ॥ कथंस
मर्थःसतुकाकपक्षवान्विमृश्यतेजातुनकार्यकारिणा ॥७६॥ कौशिकस्यभवसीहसहायःकाकपक्षकधरस्तवसूनुः ॥ नैववां
भवतिसंगतिरर्हाभाषितेनकिमनेनफलंते ॥७७॥ पराक्रमंतेकथयाद्यकेतेकौटेनधर्मेणचवामृधेन ॥ केवातदीयाःप्रभवंति
पक्षेनेयोयादिरुयात्तवरामभद्रः ॥७८ ॥ पुत्रोविश्रवसोस्तिरावणइतिख्यातोदिगंतेष्वपिस्त्रष्टुर्दत्तवरःक्षिणोतिसततंयोद्य



त्रिलोकीमपि ॥ नाद्यागच्छतियज्ञविघ्नकरणेकस्तस्यभारःक्रतुर्मारीचोपिसुबाहुरप्यनुचरौयागंसदालुंपतः ॥ ७९ ॥ नि-
शम्यवाक्यंमुनिनासमीरितंसपद्यपध्वस्तमहस्तदाख्यया॥ नाहंसुतोवाप्रभवामिगाधिजभवंतमध्यानुनयेदयस्वमे॥८०॥
वातंवहंतंजगृहेनजातुतपन्नसूर्योपिदृशानुभूतः ॥ येनैषवालोपिमयाप्रदेयःशामित्रनिष्ठःपशुरस्मिजातः ॥ ८१ ॥ शामित्र
निष्ठोभवमापशुस्त्वंनतापकृत्स्यात्तपनोयदग्रे ॥ वहन्समीरापितथातदेतद्बालोप्यबालोपिकिमीक्षितंते ॥ ८२ ॥ दातुंनरा
मंप्रभवामितुभ्यंहातुंनतेवाक्यमपिप्रत्दृष्टः ॥ पातुंसमर्थोसिकुलंमदीयंयांतुत्वमीहांवहसेवदान्यां ॥ ८३ ॥ राजन्नभ्युदयो
स्तुगच्छतिमुनिर्गाधेस्तुनूजःपरंकिंजातोसिरघोःकुलेतिविमलेपूर्वैत्यमेवावदः ॥दास्यामीतिपुनर्नहीतिलपितुंजिन्हेतिजि
व्हानतेजानीह्यद्यगतेमुनौनभविताकिंकिंदशस्यंदन ॥ ८३ ॥ चेलुर्महीध्रावसुधाचचालप्रकंपिताचापिचतुःसमुद्री ॥ दे
वाभयंजग्मुरनाप्तकामेप्रत्याहतेगच्छतिगाधिपुत्रे ॥ ८४॥ चक्रीस्वतश्चक्रिणमेषवीर्यादधःकरोत्येषकरोतिसर्गं ॥ नेति
श्रुतिंश्रावयमात्वदीयंसंदेहसंदोहमपाकरिष्ये ॥ ८५ ॥ यातुनाशनकृतेतवपुत्रंनेतुमिछतिमुनिःपृथिवीश ॥ आयतिःशु

भतरापिभविश्रीयातुल्ह्नतमथाशुभजालं ॥ ८६ ॥ रामास्त्रविद्याभ्यसनेयतेथाधर्म्यंगुणंकोटिमथानयेथाः ॥ वृद्धिंचतस्या
पियशोभजेथाःप्राप्तांश्रियंसाधुसमाश्रयेथाः ॥ ८७ ॥ बहुपदामपिशृंगयुतांमुनेःसपदिगामुपलभ्यमनोहरां ॥ रघुवृषो
प्युपदेशमुपागतामनुजगामतदाप्रमदोत्तमां ॥ ८८ ॥ दाताप्रदायप्रतिगृह्यचार्थीरघुप्रवीरःससगाधिजातः ॥ उभौतदा
स्पर्शनतःप्रमोदमवापतुःसौख्यकलप्रवाहात् ॥ ८९ ॥ तदनुवसिष्ठवाक्येनप्रहृष्टेनभुवःपरिवृढेनावसृष्टंसमंकनिष्ठेन
लक्ष्मणेनवरिष्ठंरामंतपसात्वष्टतनुर्जप्तबहुविधमनुर्मुनिश्रेष्ठोविश्वामित्रोध्यर्धयोजनामितेपथिसारवेदक्षिणतटेताभ्यांसह-
विश्रम्यवत्सरामगृहाणसलिलमभिगंतव्येपथिकदापितेमास्मभून्म्लानिर्गुणवीर्याधिकोयशःप्रकाशश्चभवत्विततिबला-
तिबलेददामिगृहाण ॥ २३ ॥ विद्यांबलामतिबलांसमवाप्यरामोगाधेःसुताच्छुचितरात्ससहस्त्ररश्मेः ॥ जात्योमणिःशुभ
तयाप्रसरत्प्रभाभिःसौमित्रिणासहपुनःसहसादिदीपे ॥ ९० ॥ असत्रोपिसत्रेच्छुर्विश्वामित्रस्तत्रतत्रतांतांचित्रतांपवित्र
तांसूचयमानसत्पथांकथांकथयन्पथिराजपुत्राभ्यांसत्रातांतांरात्रिमतिवाह्यावश्यसाध्यंसांध्यंविधिंविधायवृत्रवधाश्रितंवा-

टीप १ आशिषाभाविसूचनं २ दानात्प. वायोः ३ अव्यक्तमधुर । छू । । छू । ॥ छू ॥ ॥ छू ॥ ॥ छू ।



धंश्रवसंचरित्रमभिदधानोमुनिप्रधानंमलदानांकरूषाणांचमध्यसंधिमध्याजगाम ॥ २४ ॥ पुत्रीयतातापितपःसुके
तुनासनापपुत्रंसमवापपुत्रीं ॥ सुंदायदत्ताधिकरूपशालिनेसाताटकेमौविषयौव्यवासयत् ॥ ९१ ॥ मारीचनामानमसौ
सुबाहुंप्रासूतपुत्रौविजितत्रिलोकौ ॥ अगस्त्यदीपेप्यभवत्पतंगःसुंदस्ततःसाससुताभिषादी ॥ ९२ ॥ निवासमत्रातनुते
सपुत्रावित्रासयंतीपथिकान्समंतात् ॥ कृपाभरैःसाकमिमांजहीहिक्रीणीष्वकीर्त्याशुभयात्रिलोकीं ॥ ९३ ॥ कथाविचि-
त्रास्त्यधरापियक्षीबलेनपुन्नागसहस्त्रमुख्यं ॥ तिरस्करोतीतिनिशम्यचेतःसद्यश्चमत्कारगृहीतमास्ते ॥ ९४ ॥ पत्तीन्सहस्त्रंर
थिनःसहस्त्रंनागान्सहस्त्रंहयिनःसहस्त्रं ॥ धराश्रितानप्यधराभिगंत्रीकिंवैपरीत्येसतिचित्रकृन्न ॥ ९५ ॥ सौकेतर्वाकौण-
पतांगतेयंनागैःसहस्त्रेणबलेनतुल्या ॥ श्रीरामसिंहेनतृणायमत्वानेयापदंस्वंविनिगृह्यसद्यः ॥ ९६ ॥ कौशिकस्यवचनंस
महार्थंनीवृतेपिसकलस्यमहार्थं ॥ सन्निशम्यरघुनायकसूनुरोमितिप्रतिवचःसमवोचत् ॥ ९७ ॥ ततस्तादृशींतस्याःप्रथी
यसींप्रथामवितथांमनसाविमृशन्वचसाविशदयन्पथाचलन्वध्यामेनांविवर्धयिषुर्दाशरथिर्धनुर्मध्येनिबध्यसुष्टुतयामुष्टिंवि-

स्पष्टकष्टकृतचेतनामुषंविहितपोषंज्याघोषंस्वावेष्टाअष्टापिकाष्ठाःकुर्वंतंप्रतिविधायतमभिध्यायंतीमतिक्रुद्धांप्रमाणेनाति-
वृद्धांनिध्यायनिध्यायबद्धपरिकरःकनीयसेप्रथितयशसेलक्ष्मणायापटुत्वदयपाटिकांताटकांनिदर्शयामास ॥ २५ ॥पश्य
लक्ष्मणस्त्रीस्वभावसुलभचापलतांपलाशयोषितंपतितश्रुतिनासांप्रतिहतवीर्यगतिंकरोमीतिवदंतमापतंतीमतिक्रांतविक्रां
तांसुंदकांतांगाधिसुतहुंकृतिनिराकृतामपिपुनःपुनःशुनःपुछमिवकरौव्याधुन्वानांवयसाहृष्टरजसंवृष्टरजसंकोपाभिहतत-
याशिलावर्षंवर्षंतींप्रदरोपरोधेनपुनर्व्यत्यस्तवसनामपिगृहीतांबरांशरसंपातेननिष्करांविधायशूर्पणखाविरूपीकरणाय
कृतहस्तताभ्यस्यताकनीयसालक्ष्मणेनहृतकर्णनासांस्वकांतामिछंतीमतितांतस्वांतांसुंदकांतांविध्वाव्यध्वाश्रयामिमां-
विधेहिनिराबाधांत्रिलोकीमितिमघाध्वनिविबुधाधिभूप्रधानैर्विबुधैरभिधीयमानंसाधुध्वनिंकर्णाध्वनासाधयन्रामभद्रो-
विधिनिदेशेनशांतांविधायोपयमंनिनाय ॥२६ ॥ सुकेतुकन्याहृढरोगनाशादुल्लाघतामापयतस्त्रिलोकी ॥ रामायचास्मै
भिषजांवरायगाधेयदत्स्वास्त्रमयंहिरण्यं ॥ ९८ ॥ इतित्रिदशवाक्यतःकुशिकसूनुरानंदनोरघुप्रवरसूनवेसकलमस्त्रजा 

तंतदा ॥ ददौहयशिरोमुखंसपदिलक्ष्मणायैधितंबभूवदिविदुंदुभिःकुसुमवर्षणंनर्तनं ॥ ९९ ॥ अस्त्राणिसर्वाण्यपिरूप
वंतिबभूवुरग्रेरघुनायकस्य ॥ अस्माकमद्धास्मरसिप्रकामंतदाधुनाभूमयथाभवेम ॥ १०० ॥ खंडमग्रेविटपिनांप्रकांडैर
भ्यलंकृतं ॥ चंडरोचिरगम्यंयद्दंडिनःकस्यवाभवेत् ॥१०१॥ इत्थमनुयुक्तोराघवेणविश्वामित्रश्चिरंतनांकथामकथयत्२७
जज्ञेदित्यांकश्यपतोयज्ञोवामनरूपधृक् ॥ स्वाङ्गंबलिंनियमयन्यज्ञेभूदप्यवामनः ॥१०२॥ अध्दाश्रमपदंतस्यासिद्धाश्र
मइतीर्यते ॥ बध्दादशामुक्तिपथेसिध्दायत्रसहस्रशः ॥१०३॥ अत्रैवसत्रंभवितामदीयंतृप्तःपतत्रीशरथोहियस्य ॥ कृत
स्यभूयादितियन्मयाद्यानेमंत्रितौचापियुवांयदर्थं ॥१०४॥ अथतत्रत्याअग्निहोत्रिणोपिसत्रार्थमागतंसत्रिणंराजपुत्राभ्यां
सत्रापात्रभूतंविश्वामित्रंसपर्ययापर्यपूपुजन् २८ सिध्दाश्रमोप्यस्त्यभिधानयोगात्सिद्धाश्रमोयंपरमार्थतायाः ॥ दीक्षांप्र
विश्याद्यकुरुष्वयागंवीक्षामपित्वंकुणपाशनाशे ॥१०५॥ तदनुतस्यांरात्रौसंजातपथिश्रांत्यासुखेनप्रस्वपंतंरात्रेश्चरमेया
मउत्थितःकुशिकसुतस्तंदशरथसुतंसमयागत्यबोधकरइवशनैःशनैरुदबोधयत् ॥ २९ ॥ जहीहिनिद्रांशयनेनसाकंवंदस्व

सत्रागुरुणोष्णरश्मिं ॥ नानुष्णतामुज्झतिशत्रुभिर्यःसार्धंश्रियाप्नोतिनतंसुकीर्तिः ॥ १०६ ॥ अनुगच्छतिलक्ष्मणोयथा
त्वामनुतिष्ठाद्यतथागुरोर्वचः ॥ गुरुमात्मवतांधुरंनयत्वंपरमात्मानमयंसतांपथः ॥ १०७ ॥ तदनुतावंचनोकृतगुरु-
वचनांचनौसुलक्षणौरामलक्ष्मणौविलक्षणेनपणेनपत्रिणांगणेनकौणपानांतक्षणस्यश्रीमत्सहितानांपारिकांक्षिणांरक्षण-
स्यक्षणःकृतक्षणयोरस्मच्छ्रवणयोःकरणीयइत्यनुक्षणंसंचक्षाणौदीक्षितत्वेनगृह्यतेमौनित्वंतेजसातपसाचशुचिनावाचंय
मसंचयेनेतःषड्रात्रंरक्षापात्रंवयमितिचालोच्यस्वतोगुप्तगात्राभ्यांसच्छात्राभ्यांद्वाभ्यांयुवाभ्यांभवितव्यमितिगृहीतार्थाव
भ्यर्णसंघीकृतमुनिसार्थंतेजसामित्रीकृतमित्रंविश्वामित्रंभुवनत्रयेकृतार्थीभवनायात्यर्थंयथार्थमरक्षतां ॥२९॥ भवाभ्यमि
त्रःसौमित्रेमित्रीकुरुधनुर्वरं ॥ तेनाप्यमित्रसंघाततमस्ततिमपाकुरु ॥ १०८ ॥ अदर्शनंमानवमंतरेणयत्केकसीसूनुनिभ
स्यनस्यात्॥अस्त्रेणहन्यामितिमानवेनन्यवारयत्तंसतुमानवेन ॥१०९॥ मारीचोदशरथसूनुबाणलग्नमात्मानंतदनुविमोचि
तुंप्रवृत्तः ॥ गत्वासौशतमपितत्रयोजनानांमग्नोभूदुदधिजलेमहद्विरोधात् ॥११०॥ अंभःसुमारींचमथोसुबाहुमग्नौचवा

टीप १ अलसतां २ कार्यकालेइत्यध्या.



यावपिभूमिभागे ॥ रक्षोव्रजान्व्योमचरान्विधूयचिक्षेपबाणोरघुराजसूनोः ॥ १११ ॥ यज्ञस्यनिर्विघ्नतयासमाप्तौगाधेःसु
तोराममुवाचहर्षात् ॥ कृतार्थएवासिसदानचित्रंतथाविधंमामकृथास्तदेतत् ॥११२ ॥ तदाश्रमान्निर्गमनंसमिच्छन्गुरोर
नुज्ञांसमवाप्यरामः ॥ द्वितीयमेवंप्रतिवस्तुमुक्तोमुनिव्रजोत्तेजितवासमास॥११३॥ इंद्रादिकानप्यकरोःस्वनिघ्नकानत्या-
दराद्यज्ञियपात्रसंभृतीः ॥ सुयज्ञतांतेकृतिनःसमब्रुवन्नयज्ञतांचेतितथेतिनाद्भुतं॥११४॥लभ्यंरत्नद्वयंतत्रदृष्टिरुपृष्टिकृतौ
शुभं॥ तद्राशिगणनीयंचगुणग्राह्यंपणोत्तमं॥१५॥अभिहितंमुनिभीरुचिरंमुदानिशमयन्व्यचिनोध्धृदिराघवः ॥भवतिरा
शिषुषष्ठमभिरूप्ययानवममेतदितीहकृतांतितं ॥ ११६ ॥ गंतुंप्रवृत्तामुनयोविदेहयज्ञोत्सवालोकनकौतुकेन ॥ आगच्छतत्रा
प्नुहिरामभद्रभद्रंमुनिस्तंसमुदेत्यवोचत् ॥ ११७॥ तदनुससौमित्रीरामेणसाग्निहोत्रामत्रेणमुनिनासहितोविश्वामित्रआमं
त्र्यवनदेवतास्त्रिपथगायाउत्तरंतीरंगत्वोत्तरांदिशंप्रस्थितोस्ताचलप्रवणेपूषणिशोणावेणेरभ्यर्णेप्रदेशेकृतसांध्यविधानोरा
मेणपृष्टःप्रथीयसींस्ववंश्यकथांकथयामास ॥ ३० ॥ गतोर्धरात्रोममवंशजानांबंहीयसामालपतःकथांमे ॥ निद्राहिमाभूत्प

थिरामविघ्नःशिशुंसमानीतवतोन्यदीयं ॥ ११८ ॥ निष्पंदतामेतितरुव्रजोयंरक्षोगणःसंचरतेप्यभीकः ॥ उदेतिशीतांशु
रपिस्वभासानयन्मनोमोदमथोजनानां॥ ११९ ॥संभाषमाणामुनयश्चरामःप्रशस्तसंवेशमुपागमंस्ते॥ निःशब्दमासीत्
स्तिमितंस्थलंतच्छ्वासैर्विनावायुरपिप्रलीनः ॥१२०॥ प्रतिकूलविधिर्यथामनुष्यःसमभून्मंदमहाअयंविधुः ॥ उदयन्स
विताभविष्णुतुल्योद्रुतमागच्छतिसत्पथंरुचा॥१२१॥अदृश्यतामापुरतीवताराराात्र्यारव्यसख्यासहरामनिद्रां ॥ जहिप्रि
यामभ्युदितंकुलाग्र्यमुत्तिष्ठवंदस्वरविंसदीडयं ॥१२२॥प्राभातिकोपिपवनःकिलपूजकानांसाहाय्यमाशुविदधातिवनेत
रूणां॥वृंताच्छुथान्यवचयायसुमानिकुर्वन्नुत्तिष्ठरामविजहीहिसुखेननिद्रां ॥१२३॥ निद्रयाभ्युदिततांजनगर्ह्यांवत्सरा
मजहिराघवनूनं ॥ विक्रमेणपुनरापतितांतांमाप्रियामिवसतींविजहीहि ॥१२४॥ तदनूषसिप्रबुध्दःशुचितामधिगतोवि
रचिताचार्यपादवंदनविधिर्ज्ञाननिधिर्विश्वामित्रोविधिप्रशस्तिमुखेनसख्येनबोधकरतामुररीचकार ॥ ३२ ॥ सक्तांप्रिया
मपिसतींविजहातिकष्टात्कालेकुलीनपुरुषोविधिचोदनायाः ॥ रामस्तथाकुशिकसूनुवचःप्रणुन्नस्तंद्राभरेणसहतांव्यजहा



त्सानिद्रां ॥ १२५ ॥ ततःसमुनिंततिसहितःस्वतःकृतकृत्योपिविहितप्रातःकृत्यःकृत्यवित्पुरस्कृतःपुरस्कृत्यप्रत्यवसित-
शोणोत्तरणकृत्यंरामंभगीरथपथानुसारिणींभगवतींभागीरथींनिकषाकृतमाध्यान्हिककृत्यःकथितस्ववंशकथंकथमस्मत्कु-
लराजन्यकथेतिप्रष्टुकाममिवरामंआशंक्यप्रवाहापतितांजन्मप्रभृतिभागीरथीकथांतर्भूतभगीरथकथांतस्मैकथयामास ॥
३२॥त्वद्वंशजन्मात्रभवान्भगीरथोगंगामवातारयदत्रशांभवः॥ षष्टिंसहस्राणिसुतान्ससागरानुध्धारयामासतयावनीश्वरः
॥ १२६ ॥ त्वद्वंशकृतसोपानंगंगावतरणंश्रुतं ॥ मनःप्रल्हादनंरामजगत्रय्यास्त्वयाधुना ॥१२७॥ नाव्यप्रतानपूगाढयेगं
गावतरणेश्रुते ॥ प्रवीणजनसंश्लाघ्येकस्यनस्याव्धृदेसुखं ॥ १२८ ॥ विश्वामित्रात्सराजपुत्राऋषयोभगीरथराज
र्षिचरितंगंगापूरमिवातिपवित्रंसंशृण्वानाःपरमाश्चर्यंमन्वानागंगायानावापारदृश्वानस्तत्रतत्रऋषिकथितामरुदुत्पत्तिंवै
शालिकनृपादिकथात्द्दिविचिन्वानागौतमाश्रमाभ्यासमासेदुः ॥ ३३ ॥ इतिश्रीमद्दांतकुलावतंसजगन्नाथात्मजलक्ष्म-
णविरचिताभिनवरामायणचंपूकाव्येद्वि०स्तबकः॥२॥॥ छ॥ छ॥ श्रीगणेशायनमः ॥ व्याहरंतिनाहिपाक्षिसमूहात्वृक्षखंड-

 ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

कृतनीडनिवासाः॥ अध्वनीनभयदं तक्किमीयमाश्रमं प्रवद गाधितनूज ॥ १॥ गौतमो मुनिवरो बत वध्वा शीलरूपगुणसंय-
महत्या॥ यस्तता पसममत्र तपस्तद्रोषशप्तइ इतहाश्रमदेशः॥२॥ तदनुराजर्षिवंशजो रामो महर्षिविश्वामित्रं कतरस्मात्का
रणान्महर्षेरोषआश्रमत्यागश्चेति हर्षपारवश्येन समन्वयुंक्त १॥ सचतं जातु चिल्लेखर्षभ ऋषिवेषमास्थाय तत्स्थाने तस्या रथा
नमवमृग्य निःशलाकेतद्योषितं यौवनपाषितां मायया चेतनायां मोषयित्वा मया सह संगच्छसे चेत्कृतार्थ यस्यात्मानमित्येवं-
विधं कोपकारणमाश्रमत्यागे समभूदिति विस्तरेण सर्वमकथयत् ॥ २॥ दिविचरः सुरताधिकमोदको मधुकरः कुसुमेषु हतो
रहः॥ यदितयालतयोपरिनोधृतः कथयतस्य गतिः क्वनु भाविना॥३॥ पद्मिन्यो मधुपान् श्रयंत इति यत्तद्योग्यमेवोच्यते स्थानं
दिश्यत एतानि ष्ठत शुभे पृथ्वीनितंबे घने ॥ दायेतापितथा विधोधररसः पाणिः प्रगृह्येत चेज्जायेतापि वैरांगकोपनमनं गृह्येत चे
त्स्वास्थितेः॥ ४ ॥ मदनसमरकेलौ संप्रवृत्तौ यदा तौ सपदि शिवतनुत्वाद्यद्बिभीयादनंगः॥ इतिरहसि समानाववैरं संत्यजं
तावचलनयनमीनौ निर्विशेषाबभूतां॥ ५॥ अतनुतां तनुता दतनुः सदा किमिति चेत्सतु जन्मसमाप्नुयात् ॥ त्वयिरतो भविता

टीप—१ भ्रमरान्योक्त्यानुकूल्याशयं स्फुटयति २ आतिथ्यदक्षास्मि सर्वात्मना वशीकृतास्मीति बोधयाति ३ नरांगमूर्धगुह्ययोः ४ व्योमवासः ॥ छ ॥ ॥ छ ॥





यदि मादृशामसुलभं तव मार्दवमांगकं ॥६॥ अपश्चिमेनामरनायकेन द्वितीययासंगतया मुनेर्मया ॥ प्रसाधितः साधुतयात्त
तीयो गच्छावनायामरराजनौवनात् ॥७॥ कृत्वाकर्म जुगुप्सितं तु मघवा तस्याश्रमात्सत्वरं निर्गच्छन्पथि गौतमेन मुनिनादृ
ष्टोप्यभीकोभवत् ॥ ग्रस्तः साध्वसवेगतस्तदनु तं वाचंयमः शांतधीरप्येवं सतु शप्तवान्विफलतां गच्छेंद्र दुष्कर्मणा ॥८॥ यद
नेत्रतामनपहाय भवानप्यकृताधुना मम सुदृश्यति गर्ह्यं ॥ शतनेत्रता भवतु ते चरितोत्थं फलमादृशं पुनरितोपि न कुर्याः ॥ ९॥
यस्मात्त्रिलोकैकभगी भवान्सन्ध्यत्यस्य वेषं भगिनमिभोजति ॥ अंगेन कस्यापि दिवस्पते त्वं भगैरनंतैः सहितांगकः स्याः १०
इंद्रो निर्वृषणो झगित्यधिगतः सर्वं स्वधुपन्मंडलीं त्रस्तो वाचमुवाच दैवतगणा विघ्नो महां च्छामितः ॥ देवानां भयतः परं त्वहमि
तो दारैर्मुनेः संगतो जातो निर्वृषणोस्मि तेन शपता यूयं गतिर्मामकी ॥ ११ ॥ वाक्यं शौभपतेर्निशम्य भगवानग्निः परं सत्वरं-
संभ्रांतः कथमत्र कार्यमधुना कस्मिन्नुपाये कृते ॥ शांतिः स्याद्दिपदोधिपस्य मनसा संचिंतयन्वाहनं संवीक्ष्याण्डमथास्य तेन वि-
दधे शक्रं तदा सांडकं ॥ १३ ॥ त्वयि धर्मजातमभवन्मम सर्वं मयि दृष्टिमेव मानिपात्यय दित्थं॥ सुदृशा त्वया कथमकारि तदे

तत्त्रमद्दग्भविष्यसिचिरन्नियमेन ॥ १४ ॥ भुजंगभोगस्पृहयालुचेताभवत्यहल्येभवतीधरायां ॥ अंतर्हितायद्रजसाङ्घ्रुतां गीरामेनरेंद्रोभविताविताते ॥ १५ ॥ रामेदशस्यंदनजन्मवित्तोरामोवनंघोरतरंसमीयात् ॥ यदातवास्याविपदोविधूति स्तदात्वदीयाप्रथमाविभूतिः ॥ १६ ॥ वेषंसमास्थायमदीयमद्यमरुत्वतामेप्रमदाप्रधर्षिता ॥ इतीवतापंप्रतिकर्तुमागा द्विमालयंगौतमसंज्ञकोमुनिः ॥ १७ ॥ धनुर्धरैकोपितुरीयमूर्तिःसत्वंचतुर्वर्गतृतीयकेन ॥ संपातितांरामतमस्यपारेसंतार यैनांमुनिराड्द्वितीयां ॥ १८ ॥ पादप्रभावोबतयद्यदीयोमांमत्स्वरूपंसमनीनियद्राक्॥ पुरस्कृतःपूर्णतयापिकुर्यात्किंवेति रामंसमपूपुजत्सा ॥ १९ ॥ पूर्वंस्वरूपंसमवाप्यहल्ययासुमोद्गमश्चापिततोतिविस्तृतः ॥ वाद्यस्वनश्चप्रियसंगमस्ततः स्थानेभवत्सर्वमिदंक्रमेणहि ॥२०॥ गौतमेनमुनिनाकथमेतत्त्यक्तमाश्रमपदंबतपूर्वं ॥ संगृहीतमनुतत्रवदामोयत्स्त्रियावि रहितःसहितश्च ॥२१॥ पुराप्यहल्यात्मभुवासमर्पितायद्गौतमंसानुगतातमंजसा ॥ ततोपिदत्तात्मभुवामरुत्वतेवार्ता- ह्यसौनाथवतःसदेद्दशी ॥ २२ ॥ यद्यप्यसौगौतमधर्मपत्नीपरेणपुंसाप्रपरिवंचितास ॥ शप्तापिसाभूतिमवापतेनसंगे-



सतांमंतुरथापिभूत्यै ॥ २३ ॥ परेणपुंसाविपदंकरेणसंप्रापितागौतमधर्मपत्नी ॥ परेणपुंसास्वपदंपदेनभूतौविपत्तौचय तःपरोना ॥२४॥ गद्य ॥ एवंसपक्षक्ष्माभृद्विपक्षपक्षक्षपणकृतक्षणेनक्षणक्षणविलक्षणतक्षणदक्षरूक्षपंचशरान्वक्षविनि क्षिप्तशरक्षामक्षामतांगीकृतांतःकरणेनगीर्वाणाध्यक्षेणऋभुक्ष्णाकामाशुशुक्षणिनिर्वपणायगृहीततत्पतिवेषेणसंजातवंच नयातत्कृतांचनांप्राप्तनियतकालशतानंदामपितत्कालोपस्थापितानंदनिमग्नामहल्यांनाममुनेःपुष्करेक्षणांस्वेक्षणसंप्राप्त स्वकांतवितीर्णशापपूर्वक्षणांगृहीततदर्हणस्तामक्षीणतपःकांक्षिणागौतमेनपारिकांक्षिणासहद्वितीयाश्रमनिर्वहणायसंयो ज्यस्वोत्तरणकृतानुयोगपादोपांतसंप्राप्तांतेवासिसंशामिताधिजातंगाधिजातंपुरस्कृत्यसानुजातःसर्षिव्रातोदशरथतातोऽ निकृतोपरविप्रकृतोविप्रकृतंजनकस्ययज्ञवाटमुपागम्यसर्वतःकृतवसतिंविप्रततिंसमवलोक्यकुशिकसुतानुमत्याविविक्त निर्णिक्तप्राप्तरूपसदेशमनूपप्रदेशंविमृश्यनिवासमरोचयत् ॥ ३ ॥ पुरस्कृतोभवतिहियेनशात्रवोनसंशयोभवतुकदाचिद- त्रवः ॥ पुरस्कृतःकुशिकसुतःसतेनचेत्किमद्भुतंजनककुलेतिनिर्मले ॥२५॥ प्राज्ञोजनकसंज्ञोराजापिसमज्यायांसर्वांशेन

टीप १ उपस्थेनआपितः प्रापितः २ पुरस्कृतःपूजितेराप्यभियुक्तेग्रतःकृतइत्यमरः

सर्वज्ञानांज्यायसेसमधिष्ठितायविधिज्ञतांविज्ञायतदनुज्ञयापर्यायतःकृतसपर्यायेयदुपज्ञज्ञानायराज्ञोयज्ञेकुशलेकृतसंप्र
श्नायगाधिजायामाययाजंसंज्ञपय न्नद्यमेयज्ञसमृद्धिर्दैवतैःसफलाकृतातत्कायस्यपोषणंयदतिथिकृतेतच्छोषणंतज्जन्म-
नःसाफल्यंयन्मनसोनैर्मल्यंसावाचःकृतार्थतायामहानुभावस्तुतौयथार्थतासर्वंतदेकपदेयद्यज्ञियसदसिश्रीमत्पादप्राप्ति
रितोद्वादशभिरहोभिःक्रियायाःसमाप्तिरित्युक्त्वातदनंतरंकस्येमौकामोपमौकुमारौभवतःकौशिकत्वेसत्यपिकाकपक्षधरौ
प्रियाविवसंज्ञायमानप्रज्ञाभरौवीर्यवत्तरौपरस्परोपमौइत्यनुयुज्यप्रतिवाक्यश्रवणाकांक्षयासमसज्जत॥ ४ गद्य ॥ ततः
परिषदिकौतूहलेनशुश्रूषुतयाद्दषत्प्रायतामंगीकुर्वत्यांब्रह्मर्षिऋषभोवेदेशास्त्रेपुराणेव्यवहारेचसंप्रश्नसर्वंकषःसाकेता
धिपतेर्दशरथस्यराजर्षेस्तनयौनिर्विघ्नदेवयजनायपुण्यजननिराकरणेसुदक्षिणीकृतभिक्षणौसुलक्षणौवसिष्ठविहितशिक्ष-
णौसिद्धाश्रमेरचितसुबाहुमारीचादिरक्षोगणवीर्यनिर्वापणौपंकमग्नाहल्याकृतकर्षणौगौतमहर्षणौखंडपरशुधनुषिसंजा-
तदर्शनैषणौरामलक्ष्मणावित्यभिधायकृतमौनक्षणःकंचित्कालंक्षपयामास ॥ ५ ॥ गद्य ॥ अनुपदमेवाहल्योद्धरणश्रव



णजातानंदोगौतमनंदनःशतानंदोद्दशोःशितलीकरणायचांदनौरसाविवाशापरिपूरणायनांदनौहरिचंदनाविवदशरथनंद-
नौद्दशोरयनीकृत्यपुनरुक्तितगाधिसुतवचनमातृशापांतचरितोरामभद्रभद्रेणतेसंयोगइतिमंद्रेणस्वरेणहर्षेणकृतविश्वामि-
त्रब्रह्मर्षिशब्दसंपादनचरितवर्णनःसंप्रज्ञातसमाधिस्थितिंसर्वस्यैसदसेविततार ॥ ६ ॥ राजर्षितांसमपहायपुरात्वया
यत्संपादितःस्वतपसोबलतःकिलायं ॥ ब्रह्मर्षिशब्दइतिगाधितनूजमन्नःश्रोतापिविस्मयमहांबुनिधौनकोवा ॥ २६ ॥ य
त्रैषसंक्रामयतेविकर्तनस्तेजःस्वकीयंतमुपास्तिकामनः ॥ सत्वंविनिर्गच्छजवेनमानिनीप्रादुष्करोतीत्यपिघांटिकोब्रवीत्
॥ २७ ॥ निशम्यवैतालिकवाक्यमुच्चैर्विज्ञायदैवाकरमस्तमार्यः ॥ विज्ञाप्यगाधेस्तनयंप्रगेश्वएष्येपुनश्चेतिगृहानुपा
गात् ॥ २८ ॥ गाधेयस्तदनुसरामलक्ष्मणाभ्यांस्वावासंविदितमहानुभावसंघैः ॥ अभ्यागाध्धृदिकृतकार्यतांविचिन्व
न्नंतेवास्यहितनिकृंतनैकधीरः ॥ २९ ॥ प्राचींभानुःस्वानुरक्तांविलोक्यक्षुण्णांभोगैःसंविधायक्षणेन ॥ पश्चाच्चक्रेदक्षिणः
सप्रतीचींप्राप्तांसक्तानायकःस्वीचकार ॥ ३० ॥ भुक्त्वामुखेषुप्रतिगृह्ययत्नाच्छिलोंच्छवृत्यालपकणान्कुलायं ॥ संभर्तुंका

मोविगणोस्तकालेसायंगृहोह्याशुविवेशबालान् ॥ ३१ ॥ प्रादुर्बभूवर्क्षगणःसुतेजाःशाखामृगेंद्रःक्वचिदालुलोके ॥ र
क्षोगणःप्रोध्दतकर्मकारीप्रदोषकालोपिवनीबभूव ॥ ३२ ॥ ततोऽव्यतीतायांनिशीथिन्यांभातिप्रभातेउदितेभगवतिभा-
नुमतिसंचरतिपततांव्रातेसमुल्लसतितामरसकुलेउपासीनेभगवंतंविवस्वंतंद्विजातिसंघातेआपतितेचश्वोभूतेपुनःसंगति-
रितिकृतसंकेतेदूतैःसमाहूतोरामलक्ष्मणसहितोविहितनित्योचितव्यापृतिश्च्छात्रततिसंततसंवृतपुरःपश्चात्पार्श्वप्रांतः
शनैःशनैःसमितिमाप्तःस्वागतादिनापरमासनंसंप्रापितःक्रमेणपूजितःकुशिकसुतस्त्रिजगज्जातचेतनविदिततपःप्रताप-
जातभगवन्कुशिकजातांतर्वाणिवरेण्यत्वत्पादोपांतवर्त्यंतेवासिसदृशंकिंकरवाणीत्यभिधेह्यभिधातव्यमित्यभिधाय
विहितांजलिंसर्वतंत्रावैधेयंविधेयंसीरध्वजाभिधंराजानंविपत्रौपूर्वमधुनापिविपत्रौदशरथस्यपुत्राविमौसुक्षत्रियाजनितौ
वसिष्ठोपनीतौमयातवाप्युपानीतौनीतौवित्तौशुभलक्षणौरामलक्ष्मणौपणचणस्यवीरगणाप्रवणस्यसगुणस्यधनुरग्रगण्य
स्यसमीक्षणेकृतक्षणौतद्दर्शययथेष्टंप्रतियास्यतइत्युक्त्वारामेकृतदृगुपरामोविरराम ॥ ७ ॥ सर्वस्ययोयोनिरयोनिरीशो



न्यासीकृतंतस्यधनुर्मयीदं ॥ आरोप्यतेयेनगुणोत्रतस्माअयोनिजन्मापिवितीर्यतेमे ॥ ३३ ॥ अयोनिजन्मापिचयोनिज
न्मासन्मानसेसर्वमिदंविभातं ॥ संदर्शयस्वाप्यधुनाधनुस्तत्स्फुटंदृशोर्यास्यतितेसमस्तं ॥ ३४॥ दृष्ट्वासौसाचिववरानुवाच
राजामंजूषांधनुषइहानयंतुभृत्याः ॥ गाधेयोवदतिधनुःप्रदर्शनीयंरामायक्षितिपसभेप्रमोदयोगात् ॥ ३५॥ क्रेंकुर्वत्स्यंद
नांगोद्धततरपिटकस्छापिनंचापमासीद्वोढारस्तस्यचोचुःशरशतदशकप्रोन्मितास्तत्रगत्वा॥राजानस्त्वांसमंतात्समितिशत
कृतश्रेष्ठशक्त्युद्धताशाःकन्याहेतोररुंधन्नसकृदपिपरेयत्तदेशंपुरस्ते ॥३६॥ पश्यगाधिसुतदर्शयरामंचापमेतदितिपार्थिववः
र्ये ॥ अन्वगुकवतिदर्शयशार्ङ्गंकिंपइयधन्वमुनिरित्यवदत्तं ॥३७॥ उद्घाटयपेटींकृतचापदृष्टिःकृष्टुंनशक्यंदृढमुष्टियस्मात्॥
तथापिचापस्यकरोमियत्नंसंतोलनेचप्रतिपूरणेच ॥ ३८ ॥ लस्तकेपरमसौकृतहस्तःसिंजिनीमनयदाश्वपिकोटिं ॥ ध-
न्वनोपिसनभत्सशरव्यःपूरणेनकृतहस्तधुरीणः ॥ ३९ ॥ पाणिपीडनवशाध्धनुरैशंराघवस्यसहसापिबभंज ॥ तेंत्तदैवस
मवायसरामोयत्कृतंतदवगच्छतिलोकः ॥ ४० ॥ भंजनेनधनुषोपिसरामोरंजनंजनतद्दामथचक्रे ॥ अंजनंतदनुराक्षसरा

१—विवाहोपयमाःपाणिपीडनमित्यमरः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

जोलोचनेष्वपजयाख्यनिधौयत् ॥ ४१ ॥ गर्जैर्नसपदिचापवनोत्थंतर्जैनामकृतयातुजनानां ॥ सज्जनामपिगताजयल-
क्ष्मीपाद्मिनीतदनुराघवसूनोः ॥ ४२ ॥ शरःस्थिरोधनुर्धरोधनुर्धरोप्यकंपनःसकंपनोभवत्तदारथःस्थिरोपिचास्थिरः ॥ गु
णोनुवावचागुणंनचाद्भुतंसशब्दनोह्यृतेपिलक्ष्यवेधनात्फलंशरस्पदृश्यते ॥ ४३ ॥ धनुषःशरेणपरवीरनिरासःक्रियतेइ
तिश्रुतचरंकिलनित्यं ॥ धनुषःशरोप्यकृतयत्रकृतांतंकिमितोपिचित्रतरमस्तिनितांतं ॥ ४४ ॥ इत्थंभूतेभतपतिचापेत्र
त्याश्वस्तायांजनततौसंपूर्णपणकोजनकोस्तियथाप्रशस्तिदशरथसुतोयंप्रशास्तिप्रशस्ततयातत्रभवान्भवान्विनीतापिमे-
सुतासीतातांसितांकीर्त्तिमपिनेताविनेतोत्धतानामभियातीनांभूपतीनामितिमस्तकेकृतहस्तःसन्नहोकृतहस्ततास्यमाणव
कस्येतिमुहुर्मुहुस्तनूमांदोलयन्मुनिवृतंसोमसुतंकुशिकसुतंभवतोनुमतेनसाकेतपतिपत्तनंविश्रुताः सुश्रुतादूतागच्छंतुयच्छं
तुचपत्रिकांकथयंतुमुखतःसुखतोगुप्तौचतवसुताविति द्रुतमानयंतुभूपतिमितिविज्ञापयामास ॥ ८ ॥ अनुमतंप्रतिदातुम
थोवयंरघुपतेर्व्रतिहूतिकृतौपरं ॥ त्वमसिमुख्यतमोजनकोयतःसदृशदूतगणंतुविसर्जय ॥ ४५ तदनुअंतकांतकस्यभूत-

१ कल्पनासज्जनासमेत्य० गजसज्जीकरणं २ त्रिपुरजयोद्यतशंकरसांग्रामिकवर्णनंप्रकृतेइतिचमत्कारः ३ पूर्ववत् ॥ ॥ छ॥ ॥ छ ॥ ॥ छ॥



पतेरंतेवासिनःक्षत्रियकृतांतस्यप्रियसुहृदोविदेहाधिपतेर्वचनांतेगृहीतवृत्तांतादृरस्याशांतादूतामिथिलाप्रांतात्त्रिभिरहोभि
रश्रांतगमनेनविश्रांतिमलभमानाःश्रांतवाहनाअपिप्रमोदपराःसंतःसंतोषसंदेशहराःसाकेतपुरवरेवीरतरंदशरथंजगती
पतिमधिगत्यपत्रिकांसमर्प्यमधुराक्षरंवाक्प्रसरंचक्रुः ॥९॥ स्वस्त्यस्तुराजंस्तवपुत्रकेणभग्नंधनुर्मेदुहितुःसुचारुं ॥ पा
णिंनृपग्राहयितुंत्वरावानागच्छसर्वैरितिपत्रिकेयं ॥ ४६ ॥ प्रणिधयःपदयोरुपदानिभांप्रतिसमर्प्यतदानृपपत्रिकां ॥ सद
सिचित्रनिभस्थितिमाययुःसचसुचेलकचेलकमुज्जहौ ॥ ४७ ॥ मधुरभाषितयाजनरंजकोगतगदंकुशलंमिथिलाधिपः ॥
अनुयुयोजसराष्ट्रकुटुंबकंप्रियतयायतयारघुराजते ॥ ४८ ॥ तवसुतौपथिकौशिकरक्षितौव्यशसतांसदसिक्रतुघातुका
न् ॥ निजगुरोरभसात्कृतकृत्यतामतनुतांतनुतांव्यपहायतौ ॥ ४९ ॥ तदनुतौमुनिनासहसंगतौममपुरंक्रतुकर्मसमी-
क्षितुं॥अधिगतौचधनुश्चतुरौजनान्निजगदुर्जगदुत्धृतिकर्मणि॥५०॥अपिधनुःश्रुतदृष्टचरंचतेममयदर्थमभूत्कलहोनृपैः॥
तदिदमद्यसुतेनतवप्रभोनमितमानमितंलॅपनंपरेः॥५१॥तदनुभग्नमदःसमभूत्वनुःसपदिभग्नमदोनृपतिव्रजः ॥ तवसुतेन

१ कचेलंतम्बिवंसनमितित्रिकांडशेषः ॥ २ प्रेम्णा ३ प्रभूततया ४ ऊचुः ५ मुखं ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

कृतापिममात्मजाशुवनितावनितापनिराकृतौ ॥ ५२ ॥ ममभवेज्जनुषःकृतकृत्यतातवभवेदपिवासदपत्यता ॥ उपकृति
स्तुकृतामयिचेत्त्वयानपिवतापिबताध्वगमिक्रिया ॥५३॥ नयननंनियुगंममतावकागमनवारिविनानहिसौख्यभृत् ॥ उ
दितमीदृगिदंरिपुघातिनायदिचसंदिशतादिशतावकं ॥ ५४ ॥ ततोदूताहूतःपुरुहूतसखःसदसिपुत्रविवाहचिंतोष्णनि
राकरणच्छत्रपत्रंवाचायित्वासंमंत्र्यसुमंत्रादिभिर्मंत्रिभिर्वसिष्ठादिभिरृत्विग्भिर्गृहीतपरःशतहास्तिपत्तिसप्तिरथःसावरोध
पोष्यजनसार्थोनिर्गत्यायोध्यातोमिथिलागंतव्येपथिसंस्तूयमानचाटुकारकथितकथोदशरथश्चतुर्भिरहोभिर्निवासिजन-
श्वःश्रेयसदेहान्विदेहानभ्युपगतस्तदधिपतिनास्वागतादिनासत्कृतोदिष्ट्यावसिष्ठादिसहितःसुतवीर्यनिर्जितमत्सुताविवा
हसंजातप्रियतासंभृतोहमपिसंबंधबंधुरमध्यारोपितइत्युक्तोनादातृवशःप्रतिग्रहीतेत्युक्तप्रत्युक्तःपुत्रालोकनसक्तआनं-
दाश्रुभिःपृक्तोनुभूतजनककृतक्रतुसुतांकुरारोपणकृत्यःसुकृतोपगमनसुखितःसमस्तैर्नक्तमतिवाहयामास ॥ १०॥ अथश्वः
प्रभातेविभातेसीरध्वजोपिस्वानुजंकुशध्वजंवंशध्वजंसुप्रजसंप्राज्यमहिम्नाद्विजेननिर्जितवैरिव्रजेनमंत्रिणाचसविधिजंसा

१–पृथ्वी ॥ छ । ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ छ ॥

त्मजमजतनयंसमज्यायामानीयकमलासनजातमृतेस्मदभिजनेनकिंचिदितिदशरथकृतेनसंकेतेनवसिष्ठमुखविदितब्र-
ह्मादिरामावधिवंशकथस्तदनुप्रथितकथितस्ववंशकथोगुणैः प्रथीयसेरामायसीतालक्ष्मणायोर्मिलेतिन्निर्वदन्नुत्तराफल्गु-
न्यांदास्येत्वंगवादिकंसुतनिमित्तंदत्स्वेत्युक्त्वामुहुर्मुहुर्दृगधिगम्यमानरामःसुखारामोविरराम ॥११॥ वंशास्तुप्रथिततरा
भवंतिलोकेसंबंधोप्यातसदृशोगुणैश्चरूपैः ॥ कन्येद्वेयदपिचरामलक्ष्मणाभ्यामुत्सृष्टेतदपिवचोस्तिकौशिकीयं ॥५५॥
कुशध्वजस्यापिसुतेसुतेजितेगुणेनरूपेणपरेणविश्रुते ॥ देयेसुपात्रेभरतायभूपतेसौमित्रयेचेतिसपत्नघातिने ॥ ५६ ॥
संश्लाघ्यवाक्यंजनकोभ्युवाचवसिष्ठविप्रेरितकौशिकस्य ॥ धन्यंकुलंनौयदिहास्तिहीनंतत्पूरणेदक्षतरौयुवांयत् ॥ ५७ ॥
एकेनानिर्वर्त्यतरोदिनेनभवेद्द्वयद्वयोर्यदिवाविवाहः ॥ कृतंसुकृत्यैःसुदिनाहमीडचैर्योज्याश्चतस्रश्चतुरैश्चतुर्भिः ॥ ५८ ॥
इत्युक्त्वाकुशिकसुतंवसिष्ठयुक्तंशैक्ष्योहंमुनिवरपूज्यपादपद्मौ ॥ यौष्माकःपरमितिवेत्तुमर्हथस्तौसाकेतंममामिथिले-
त्यवोचदत्वा ॥५७॥ शुभमतनुतसर्वंयद्भवान्पूज्यपादाननमदृषिवरिष्ठान्संयुतात्राजसंघैः ॥ भवभविकततस्त्वंभाजनंभूमि

१–संरक्षित्रे ॥ छ । ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ छ ॥

लोकेवदसपदिविधातुंस्वस्तिकर्माणिराजन् ॥५९॥ आपृच्छ्यतंमैथिलमाशुराजागत्वागृहंस्वस्तिविधिंविधाय॥प्रगेपिगोदा
नविधिंद्विजेभ्योद्रव्याणिभूयांस्यददात्सुतार्थं ॥ ६० ॥ मातुलोपिभरतस्यतदानींदर्शनोत्सुकतयामिथिलायां ॥ आगतस्त
दनुसत्कृतिमाप्तःप्राहतंसकुशलंस्वगृहोत्थं ॥ ६१ ॥ अन्येद्युरप्येषवसिष्ठमुख्यान्कृत्वापुरस्तादधियज्ञवाटं ॥ गतोवासि
ष्ठोजनकायसर्वमुवाचकर्तव्यतयायदासीत् ॥ ६२ ॥ तदनुजनकराजोपिविज्ञातवसिष्ठवचनानुपदमेवससुतंदशरथमंतः
प्रवेश्यसवसिष्ठंविश्वामित्रंशतानंदंचत्रपायांनीत्वावेदींसमंततोमंगल्यकर्मार्हैर्वस्त्वलंकृतांविधायतस्यांसमृत्धंधनंजयमा-
धायविधिमंत्रपुरस्कृतंजुह्वत्जातवेदसःसमक्षंराघवस्याभिमुखंसीतांपुरस्कृतांसमानीयेयंममदुहितासीताहितायभवतो
भवतादित्येनांगृहाणपाणिनापाणौरघुवरेण्यरामघनछायंत्वांछायेवअनुगछत्वित्यभिधायविधिनाऋषीणांसाधुवादंकर्ण
योर्निदधत्धर्षेणवत्सलक्ष्मणागच्छप्रतीछोर्मिलायाःपाणिनापाणिंतथैवशुभरतभरतत्वमपिविश्रुतकीर्तेःश्रुतकीर्तेर्विक्रम-
तिरस्कृतवृत्रघ्नशत्रुघ्नकृतमंडनायामांडव्याःसर्वेभवंतएताभिराप्तकामावामाभिर्भवंत्वित्युत्क्वादशानंदनकुसुमवर्षंश्रुत्यादुं



दुभिनिर्घोषंगंधर्वाणांगानमप्सरसांनर्तनमप्यनुबभूव ॥ १२ ॥ चतत्भिःसाहितान्चतुरःसुतान्हुतहुताशनकांश्चतुरःसु
तान्॥दशरथःप्रतिगृह्यकृतार्थंतांप्रतिययौशिबिरंचमुदान्वितः ॥ ६३ ॥ जानक्यःप्रतिसदनंभवंतिकन्यालोकास्ताअभिद
धतेनजानकीति ॥ वैदेहीमभिदधतेप्ययोनिजांतांकोहेतुर्भवतिहितंनचप्रतीमः ॥ ६४ ॥ जनास्त्रियंधर्मविवर्धनायविना
लभंतेनहिमार्गणेन ॥ चित्रंत्वयंराजसदस्यभंक्तोधर्मस्यभंगेनवधूंप्रपेदे ॥ ६४ ॥ ततोरात्र्यांव्यतीतायांपरित्रातात्रिशंकौ
तद्युंदुश्चरंतपउत्तरंमहीधरंविदेहमापृच्छ्यगतवतितत्रभगवतिविश्वामित्रेजनकराजदत्तैर्वैवाहिकदेयैर्वसिष्ठादीनृषीन्पुरस्कृ
त्यपुत्रैःस्नुषाभिश्चसहायोध्यामभिजिगमिषौरघुराजेप्रविशतिस्वनिलयंजनकराजेपक्षिषुघोरंव्याहरत्सुमृगेषुप्रदक्षिणंप्र
क्रमत्सुकिमिदमितिवसिष्ठंपृच्छतिराजनिउपस्थास्यतिभयंयास्यतिचलयंपक्षिक्रूरव्याहारान्मृगप्रदक्षिणप्रक्रमणादिति
समादधानेविधिसंभवेमुनौप्रवातिमहोत्पातवातेरजोजनिततमसासंवृतेसैन्येरामलक्ष्मणवसिष्ठेषुसंज्ञषुजटामंडलेमं-
डितगंडप्रांतभागंपरशुदंडमंडितबाहुदंडंतांडवितकोदंडकांडंप्रतापचंडंभगवंतमपरंमार्तंडमिवभृगुपुंडरीकंदृष्टवतिरा-

जनिकिमयंपुनरपिक्षत्रोत्सादनंकरिष्यतीतिशंकितचेतसिसपरशुरामोदाशरथिंराममभ्यवदत् ॥ १३ ॥ रामत्वयाहर
धनूरभसात्प्रभग्नंश्रुत्वाततोहमगमंतवसन्निधानं ॥ वीर्यंविचित्रतरमस्तियदित्वदीयमस्मिन्धनुष्यनुपदंपरिदर्शयस्व ॥
६५ ॥ निःक्षत्रियांकृतवतःपृथिवींममाद्यसद्योनवोद्भिदभवस्त्वमथोविराजः॥ द्वंद्वंकुतोप्यलभमानइवास्मिकिंतुसाकंत्वया
तदपिमेभविताप्रशस्तं ॥ ६५ ॥ नहिपूरयेःशरकरस्त्वमिदानींममपश्यतःसतइदंधनुरग्र्यं ॥ पुनरेषवप्तुरहमप्यनृणत्वं
परिशिष्टमिष्टमपिपूरयितास्मि ॥ ६६ ॥ दशरथोवचनंश्रुतिदाहकंमुनिसुतस्यनिशम्यतदेदृशं ॥ विरमरामकृताद्भुतगर्हि
तान्नहिमुनेरिदमित्यवदद्भयात् ॥ ६७ ॥ यदिपुनर्धृतमस्त्रमितस्त्वयासुरपतौप्रतिसंधितमन्यथा ॥ भवतितर्हिकथंवित
थाद्भयान्विपदिमोचयिताभवितात्मनः ॥ ६८ ॥ जरसियोप्यभवंकिलयत्सुतीकृषिकृताक्रतुतःपरमादरात् ॥ तदिदम
द्यसमस्तमपिद्रुतंविगलितंभवितात्वयिरोषणे ॥ ६९ ॥ तवपदोर्निपतेयमथार्हयोर्ननिपतेयमहंसुतितापदात् ॥ अनुगृ
हाणगृहाणशुभार्हणांविरमराममुनेसुतसाहसात् ॥ ७० ॥ विरमविरमदृत्वधन्नातवानस्म्यहंत्वांविरचितवलयस्त्वंस्त्रीषुपा

टीप १ अंकुरः ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ । छ ॥ ॥ छ ॥

ण्योर्विलीनः ॥ कृतमपिचरणेमेसन्निपत्यापचित्यायदहमपिनशक्तस्त्वत्सुतस्यापचित्यां॥७१॥शैवंधनुर्यज्जनकेशिवेनन्नि
क्षिप्तमासीत्कलहेजितेन ॥ विष्णोस्तदेतन्ममपित्र्यतीर्थात्प्राप्तंधनुःपूरयवीरवर्य ॥ ७२ ॥ धनुषाग्रियेणयदिभार्गवशत्रू
न्विनियोज्यबाणमपिवप्तृनिमित्तं ॥ जितवानसिस्त्वमनृणंप्रतिकर्तुंतदिदंमुखेनवदसीहकुतस्त्वं ॥ ७३ ॥ त्रिःसप्तकृत्वो
रघुराजपुत्रस्त्वक्षत्रियान्परशुमुखेनसर्वान् ॥ तीक्ष्णेनहंताहमितोपिकंचित्प्राप्तंनहन्यामितिमाकृतीभूः ॥ ७४ ॥ क्षात्रंनते
जस्त्वयिजातिजातंयत्पातिसाधून्विहिनस्तिदुष्टान् ॥ त्वंतुस्थितोऽव्याघ्रतयानरेषुधर्मेणतेसर्वमपाहरामि ॥७५॥ यथानचा
स्त्रीभवितातथात्वंकुर्वन्पुनःपाणियुगंत्वदीयं ॥ तथाविधंसद्वलयंविनापिजानीह्यहंकांबविकोभवामि ॥७६॥ हस्ताद्गृहीत्वा
शरमुग्रतेजाःसंयोज्यतेनैवधनुःप्रकामं ॥ यद्ब्राह्मणोसीतिमयैतदंतंक्षांतंधियाकुत्रशरंक्षिपामि ॥७७॥ यत्त्वंकुलेप्याविरभू
र्भृगूणांब्राह्मण्यमत्याहतमस्तिजात्या ॥ सर्वंत्वयैवैकपदेविसृष्टंयन्मामशक्तंमनसाकृथास्त्वं ॥७८॥ यद्भार्गवोसिप्रथमंसुपू
ज्यस्तथापिगाधेयसुत्दत्प्रकामं ॥ यद्रावयाविप्रपराभवंतिततोनतेस्यादधिकंव्यलीकं ॥७९॥ वाचाविप्रकृतंभृगूद्वहबहु-

टीप १ बूजया २ क्षये ३ क्षात्रेणप० धनुषा ४ शांखिकः

प्रागल्भ्यमत्युझ्झतायत्तद्विप्रकृतंत्वयातदथवाब्राह्मंसदोगच्छता ॥ विज्ञेयंकिमथात्रवक्षियदिनोलक्ष्यंशरंकुत्रभोस्त्यक्ष्येत्रा
णहरंबुधोप्यबुधतांजाल्मेनसंयातिहि ॥ ८० ॥ हन्यांयदिब्राह्मणजातिपूज्योभवान्नहन्यांशरमप्यमोघं ॥ कुत्रक्षिपेयंतव
वानिरुंध्यांलोक्यांगतिंकिंकिमुनिश्चिनोमि ॥ ८१ ॥ रामस्यवाक्यंसतुपर्शुरामःश्रुत्वानकिंचिद्वदतिस्मतत्र ॥ जडीकृ
तोवीर्यगतेरवीर्योदेवेषुपश्यत्सुसमंविधात्रा ॥ ८२ ॥ विरमरामशरस्यविमोक्षणान्मयिविभोबहुधोपकृतंत्वया ॥ यद-
सिविष्णुरितःशरमोचनंकुरुतपोजितलोककदंबके ॥ ८३ ॥ इतिपर्शुरामवचनानुपदंरघुराजसूनुरपिदिव्यशरं ॥ पर
मत्यजत्सतुमहेंद्रधरंक्षणतोगमत्सुखमथापिजगत् ॥ ८४ ॥ जमदग्निसुतेगतेथरामोगुरुमुख्यानभिवाद्यराघवोसौ ॥ र-
घुवीरिपुरंप्रयाहितूर्णंपितरंस्वीयमुवाचधीरएवं ॥ ८५ ॥ तदनुयौवनभरभारितकुचतटीभिर्वधूटीभिर्जगदानंदनैऋष्यशृंग
विहितक्रतुजनितानंदंपुनरुक्तयद्भिर्नंदनैःसंयुतःपूर्वंपर्शुरामाभिगमकृताक्रंदैर्जनवृंदैःकृतानंदनोजनंदनोमंदमंदवहमा-
नपवमानसेव्यमानःस्वंपुटभेदनमधिगत्यायोध्यांनिर्वर्तितकुलवधूप्रवेशकृत्योविसर्जितानिर्जितवैरिजनमातुलगृहगमनो

त्सिक्तशत्रुघ्नभरतःसुखेनगणरात्रमतिवाहयामास ॥ १४ ॥ गुरूणिकार्याणिसुखेनकुर्वन्राजाज्ञयाज्ञातसमस्ततंत्रः ॥ सौमि
त्रिणासार्धममोघकृत्योननंदसीतासहितःसरामः ॥ ८६ ॥ इतिश्रीमद्दांतकुलावतंसजगन्नाथात्मजलक्ष्मणविरचिताभिन
वरामायणचंपूकाव्येतृतीयस्तबकः ॥ ३ ॥ शत्रुघ्नेनमनोवशीकृतिपरेणाढ्याशुसार्द्धंगतोमातृभ्रातृनिकेतनंसुरुचिरंभोगा
ननेकान्भजन् ॥ तत्रासौभरतोसकृच्छुभरतोरामेपितुःसंस्मरन्राजाचापिगृहेषुपुत्रसहितोप्यासीत्तयोरागतः ॥ १ ॥ तत्रा
पिराजागुणवत्तरेषुपुत्रेषुसर्वेष्वपिसत्सुनित्यं ॥ रामेधिकंप्रीतमनाबभूवबबंधुरस्यापिगुणायदेनं ॥ २ ॥ गुणेनगृह्योभवती
हगृह्यकोयोयस्यतस्यैवहृदेसरोचते ॥ वनेचरंत्वंपशुचरत्वमंजसातस्येवराजाविममर्शमानसे ॥ ३ ॥ रामःप्रजारंजनलब्ध
वर्णोगुणैःपरैर्वावयसावरीयान् ॥ राजायथास्यादितिमंत्रिवर्यैःसत्रासभायामवदत्सराज्ञः ॥ ४ ॥ रामोनयान्यायपयोंबु
भेदेहंसोस्तिराजाभवितायतोवः ॥ सदाप्रकाशेनसुखेनभाव्यमित्यत्रकिंवोमतमस्तिचिंत्यं ॥ ५ ॥ कुलात्प्रतापादयमस्ति
हंसःकीर्तेःप्रसारायसचास्तुराजा ॥ तवानुकूलंमतमस्मदादेःप्रशास्तृशास्यत्वधियानचोक्तं ॥ ६ ॥ तत्रोच्यतेयल्लपितंभव

१ गृहासक्ताःपक्षिमृगाछेकास्तेगृह्यकाश्चतेइत्यमरः २—आरण्याःपशवोमृगाः प० देभाविदंडकाण्यसंचारित्वंदेवत्वापशुचरत्वं ॥ छ ॥ ॥ छ ॥

द्विर्विज्ञायराजानुगुणःसुतोमे ॥ ऋतामृषावाभवदुक्तिरासीद्व्योर्भवंकिंवदतात्रचोत्तरं ॥ ७ ॥ यदात्वमासीन्नृपति
स्तदानींगुणेनरूपेणचविक्रमेण ॥ जायान्समोवाविमलेकुलेतेनासीद्विशालेपुरुषोत्तमोन्यः ॥ ८ ॥ आशास्महेनोवयमेव
केवलंवृद्धास्तरुण्योवनितानिरंतरं ॥ ध्यायंतिदेवानुपयाचयंतिभवत्स्वयंराज्यपदेतवात्मजः ।९। तदनुवचनीयपदवीदवीय
सींरामचंद्रस्यस्वपदाधिरोहेनेदीयसींमर्थसारेणद्राघीयसींपुरुषवृषोयंगामुपभोक्तुंदक्षतरइतिपारिषदींस्वतर्षानुकूलांस्वहृ
दयानंदजननीमपिसत्स्वदयहृदयानंददायिनींवाचमाकलय्यसर्वेपिज्यायांसंपुत्रंराज्यस्थमिच्छंतिभवंतइतितान्प्रत्यचर्यंते
षुशृण्वत्सुचैत्रोयमस्मिन्सर्वमित्रंमत्पुत्रमभिषेक्ष्यथतदर्थंपदार्थसार्थमर्थयतनिर्विघ्नमस्त्वितिदेवताःप्रार्थयतेत्युक्त्वावसिष्ठ
वामदेवौसंप्रार्थ्यदशरथोमंत्रिप्रधानंसुमंत्रंनिमंत्र्यरामानयनेप्रेषयामास ॥९॥ मंत्रंनिवेदयितुमानयरामचंद्रंगत्वागृहंसप
दितस्यसुमंत्रभद्रं ॥ भद्रैर्मृगैरपिपुतंपरमस्ततंद्रैर्भद्रेणयोजयितुमद्यनिजेनसत्वं ॥१०॥ राजाज्ञयामंत्रिवरःसुमंत्रोगत्वा
गृहंतस्यनिवेद्यतत्वं ॥ रथेनराज्ञोरथिनंसरामंविधेयमद्वाप्यनयत्सदेशं ॥११॥ गंभीरताब्धीरघुराजसुनुःकांतंविलोक्या



भ्युदितंपुरस्तात् ॥ मुदासचक्षुःकमलप्रसारंवृध्दश्चकारापिचरामचंद्रं ॥१२॥ ततोमंत्रिवरेणसुमंत्रेणरथिनंरामंपुष्यरथ
तःपाणिपाथोजंप्रदायावतार्यसूचितंयथायथंप्रासादपथमधिरोहंतंमेघच्छायंविडंबयंतंस्वचरणयोःसनीडमागत्यनिपीड-
यंतंयोगिध्येयंजपतांभागधेयंस्वनामधेयंनिवेदयंतंबाहुदंडाभ्यामालिंग्यस्वर्धुनीजनकंमूर्धन्यवघ्रातंदत्तासनंकृतमानंज्या
यांसमुन्नतांसंस्वसूनुंकृतकुशलप्रश्नकथंदशरथःसर्वपर्थानरुचिरांवाचमुवाच ॥ जातोसिदारेष्वमितप्रतापःश्रेयःसुरामापि
गुणैर्युतस्त्वं ॥ ज्यायान्वयस्तोप्यासिमत्सुतेभ्यइच्छंतिसर्वेत्वयियौवराज्यं॥१३॥पुष्येणयुक्तोभवितानिजेनप्रातर्द्वितीयेन्हि
सरामचंद्रः ॥ राज्येनकुल्येनममापितर्षइष्टेनकर्केणचरामचंद्र॥१४॥नंदंतिरात्रावुदितेनतेनकृतप्रकाशेनजनाःसमस्ताः ॥
दिवानिशंरामतथाविधेनत्वयातुनंदंत्वियतीभिदास्ते ॥ १५ ॥ आत्मानमत्रप्रविधेहिमित्रंतमोपिसांद्रंषडमित्रजातं ॥
नयस्वनाशंस्वयमभ्युदीयविनष्टशोकान्कुरुमित्रकोकान् ॥ १६ ॥ इष्टंयदास्तेतवभागधेयंयुधाजितागत्यविमातृजस्ते॥
नेयोभवत्तद्दरतोप्यनुक्तोभजस्वभव्यस्यतुभाजनंस्वं ॥१७॥ तद्राजवेश्मभवराघवयौवराज्यवृत्तांतमाशुपरिगृह्यचरास्त

दानीं ॥ रामस्यमातृसदनंरुचिरंप्रविश्यतस्यैनिवेद्यसुखितामनयन्द्रुतंतां ॥ १८ ॥ कल्याणमत्यद्भुतमोदकारिरामस्य
मात्रेप्रददुर्मुखेन ॥ रत्नंचराःसानुपदंचरेभ्योयदुत्तरंराजवधूसदक्षं ॥ १९ ॥ रामव्रजत्वंकुरुचोपवासंद्वितीययासार्धम
तीवसत्या ॥ अग्र्यंशुभंयस्यविधानतस्तमाधेहिवन्हिंझटितित्वमद्य ॥ २० ॥ अंतःपुरंमातुरथोप्रविश्यददर्शतांतत्रसु-
मित्रयाढ्या ॥ पुत्रस्यराज्यस्थितिरस्त्वविघ्नेत्येवस्मरंतींविधुमंतरंगे ॥ २१ ॥ कर्तापितामामभिषेकिणंश्वइत्यूचिवांसंसुत
माहदेवी ॥ अश्रावितत्वन्मुखतोमयैतद्यदर्चितोभूत्पुरुषःपुराणः ॥ २२ ॥ यथार्थनामाभवलक्ष्मणस्त्वंयच्छ्वःपितामामभि-
षेक्ष्यतीति ॥ रक्षाधुनात्वंवसुधांक्रमात्तांप्रशाधिशत्रूनपिविक्रमात्तां ॥ २३ ॥ इत्युक्त्वापवनइवजवनःस्वभवनसंजवनमा
प्तःश्वोभाविन्यभिषेचनेवचनीयमनुसवनमधीयानोदशरथतनयोराज्ञासंदिष्टमिष्टमुपवसनमुपदेष्टुमृषिंवसिष्ठंद्वारप्रकोष्ठ-
कस्यनेदिष्ठंप्रदेशमागतमाज्ञायज्ञानदृशंतपःकृशंभृशंनिर्विशंकआत्मनःपंकजातमभिनिर्माष्टुंकुशलंप्रष्टुंपंकजातजाततातं
शक्तितातंविज्ञातानंतशाखंपंचशाखंपंचशाखेप्रदायदृढांगात्तुंगाच्छतांगादवतार्यप्रतार्यवचनरचनाभिरकृतग्राम्यनिर्वेश

आसनउपवेश्यतदास्यतःसीतासहितउपवासव्रतकल्पमाकलय्यरविकल्पमरुंधतीतल्पंपस्त्यायविसर्जयामास ॥ २ ॥ स
चसभाजनेनकृतंसभाजनःप्रजानंदनमजनंदनंराजानमभ्येत्यकृतमित्यभिधायततोनिर्गत्यसत्वरंस्वावासंप्रविवेश ॥ ३ ॥ प
त्न्यासार्धंरामचंद्रेणवन्हौदेवंविष्णुंस्वादुहव्यैःप्रतर्प्य ॥ शेषंप्राश्यंप्राश्यसुप्तंनिशायांपश्चाद्यामेराघवेणप्रबुद्धं ॥ २४ ॥ नि
र्वर्त्यकृत्यंक्रमतःसविज्ञःप्रत्येत्यपस्त्येनिजवस्तुजातं ॥ प्राज्यंसुराज्यंप्रविधातुकामस्तुष्टावदेवंप्रणिपत्यमूर्ध्ना ॥ २५ ॥ पूर्णा
बभूवसकलापिपुरीद्विजानांपुण्याहघोषभवनैरपितूर्यनादैः ॥ रथ्याप्रदीपसुमनोगुरुधूपजातसंमार्जनादिकृतमंगलसंवि
धाना ॥ २६ ॥ सर्वेषुलोकेषुकृताधिवासोरामाभिषेकेव्यपहायकुब्जां ॥ आनंदआसीदथमंथरांतांयत्रप्रवेशःकिलनांभसो
पि ॥ २७ ॥ तत्राभिषेकेसकलापिधात्रीविसारिरूपप्रमदाब्धिपात्री ॥ नमंथरायामभवद्विधात्रीमुदानदूनेपियथासुतंत्री
॥ २८ ॥ रामाभिषेकेक्षणतोपिदूनाजात्यायदूनासयथात्तसूनां ॥ सौधाज्जगत्यांइवतद्वसूनांच्युतापसाकेकयराजसूनां
॥ २९ ॥ उत्तिष्ठशेषेच्युतभाग्यशेषेराजन्ययोषेसतिवाविशेषे ॥ कुतोनियुक्तासिघनान्नपेषेप्रत्येहिपत्यौनमनोसिवेषे-

१—आनंदन २ न्युब्जां ३ वधस्थानं ४ लोकात्

॥३०॥ विज्ञातराजन्यनयाब्धिपारास्वकार्यकालेप्यचलाक्षितारा ॥ मयासदासत्यपिवासचारासाराजसीवाधिकृतावि
चारा ॥ ३१ ॥ किंमंथरेसर्वनयेप्यमंथरेपरैर्यथाविप्रकृताभिलक्ष्यसे ॥ तद्ब्रूहिसात्वंममसद्विशेषंकर्त्र्यस्म्यहंतेरिपुमप्यशे-
षं ॥ ३२ ॥ मूढानजानासियथात्वनूढापत्युःकृतिंयद्यपिभाग्यमूढा ॥ तथापितावत्कजनोनसोढाद्रष्टुंसपत्नींतववत्सरू-
ढां ॥ ३३ ॥ कैषासपत्नीभवितैकपत्न्यौयेतेमदीयेभवतःसपत्न्यौ ॥ प्रत्नेपिकालेमयिभूरियत्नेसुतेसमानेभरतेपिरत्ने
॥ ३४ ॥ विज्ञायतेकेकयराजपुत्र्याप्रज्ञायादिस्यात्तवदर्भतीक्ष्णा ॥ विवासितस्तेभरतोयदेतदारोप्यतेराज्यपदेपिरामः
ददानिकंतेवरमद्यतत्परेयंनाप्नुयुःक्वापिकदापितंपरे ॥ नमेस्तिरामाद्भरतेविशेषदृग्जानीहितत्त्वंममयन्मतंसुहृक् ॥३५॥
मूढेपंडितमानिनित्वमधुनामद्वाक्यमत्याहृतंनोकुर्यायदितेसुतोहिभवितादासःपरस्यांतिके ॥ त्वंचापीहदृशोःसमक्षमथवा
ब्रूयांकिमत्राधिकंभूयाःकेकयराजनंदिनिघटीचेटीदिनंगंत्वन ॥३६॥ रामोयदिप्राप्स्यतिराज्यमद्यक्रमेणतस्यापिसुतोपित
त्सुतः ॥ एवंचकालेनसराजवंशोराजन्यमात्रंतवसर्वसंततिः ॥३७॥ एवंविधंचिंतयकिंचिदंजस्तवात्मजःस्याद्भरतोपिरा

१ नक्षः

जा ॥ यथैवरामोपिविवासितःस्यात्तथापथागच्छसुखेनभीरु ।३८। एवंबहुविधयामंथरयागिरामंथरयाप्रतिबोधिताश्वपाति
दुहिताविवासयामिरामंस्थापयामियौवराज्येभरतंपरंतुकथंकारंमंत्रंमंत्रयसेयदत्रमधुरोपसंहारंतदत्रवदसारंयथागमि-
ष्यामिविपदः पारंवारंवारमप्रतिबोध्यमध्यमलोकालंकारंरघुवरंनरवरंददामितेशोभितकलेवरंसुंदरतरमलंकारंसमुद्दिशय
तरांहिततरमितिव्याहरंतींकेकयराजदुहितरंरामयौवराज्याभिषेकांतरायकरणायामंथराकिंनस्मरसिप्राप्तेप्यनेहासिस्मर-
णीयंमयैवविवरणीयमितिचेच्छृणु ।४॥ पुरामरासुरसमरेनरपरिवृढैरपरैःपरिवृतोरघुवरोदेवराजशासनतोदशरथस्त्वया
सहितोवैजयंतपुरवसातिंशंबरासुरंनिहंतुकामः परनिरासनपरैरसुरवरैःशरनिकरैरतिवेलंकश्मलमापितस्त्वयापयाताभि
यापवाहितःक्रमेणोपचारैः प्रतिबोधितस्तथास्थिरतरमानंदमापितोयथावरयुगंदापितस्तदनुअवसरेवरौप्रतिगृण्हीयामि
तिप्रार्थितइतितदेतद्विविक्तेउक्ताहमत्रभवत्याभवत्यास्मारितासितदेकेनदवीयसिदेशेचतुर्दशशरदोविपिनेगहनेरामस्यवि
वासनमपरेणभरतस्यराज्यासनमितिर्तीर्थेनयथाविश्लथमूलः पुनरागमनेरामःस्थिरश्चतेभरतइत्युक्त्वाविरम्यमास्मवरत्र

तिनिधिभूतंनिधिभूतंकार्तस्वरादिकंगृण्हीयाःपरंतमेवनिगृण्हीयाइतिवदंतीपुनःपुनर्भावंजिज्ञासमानावैरिसमानाकैकयीं
विवशयामास ।५। कुब्जासिदासिभृशमब्जमुखीसखीत्वंकुब्जास्तवाद्यपदपंचनखींभजेरन् ॥ नत्वांविहायपदमेकमपिप्रद
द्यांवर्णनतेसखिसितास्मिनवासुवर्णैः ॥ ३९ ॥ मंदासिकेकयिनिसर्गवशेनमृद्वीतन्वीपरंत्वमसिकायधियोर्निवेशे ॥ शेषेवि
हायशयनंयदिरात्रिशेषेसैषाशिरस्यपिधृतिस्तुनयस्यशेषे ॥ ४० ॥ रामःप्रयातिवनमद्यतुलक्ष्मणेनतल्लक्षणेनभरतोपिहि-
राज्यमृद्धं ॥ संप्राप्नुयादितिचचेतसिरूढपादंवाक्यंविमृश्यकुरुकेकयितत्तथात्वं ॥ ४१ ॥ दासीवचस्तदनुलक्ष्यतथाविधा
त्रीसांगादलंकृतिचयंक्रमशोवतार्य ॥ भूमौनिधायविविधंमृगशावनेत्रीशय्यांचकारभुविकेकयराजपुत्री ॥ ४२ ॥ तद-
न्वधीतनयोजतनयोविनयगृहीतैरनुचरैःपदेपदेजयशब्देनवरीयसावयसाजरसाचतरसापरिगृहीतोविभवतःपरीवारस-
हितोरामाभिषेकप्रवृत्तिंनित्यंविनतायैवनितायैनिवेदयितुकामोंतःपुरंप्रविश्यतत्रमंचेतांकेकयीमपश्यन्प्रतीहारीमुखवि-
ज्ञातस्थितिनांतःपुरागारंकिंतर्हिक्रोधागारंप्रविष्टांस्त्रीविशिष्टामनिर्मृष्टपटवेष्टितामनिवेशितांगपरिष्कारांकेकयराजदुहित



रंपाणिनापरिमृष्टांविधायहृदिकरंनिधायकेनाधिनाव्याधिनावाकृतसन्निधानासीत्यभिधीयमानापिकरौधुनानांविविधैर
भिधानैर्व्याहर्तुमुपक्रांतवान् ॥ ६ ॥ सुतनुवितनुवाचंकोगदस्तेंगदोहंवदवदकिमुभूमौत्यक्तभूषोषितासि ॥ त्वमसिवच
सियोषेवेश्मनःसद्भिभूषेभवसिनिहतविघ्नासर्वमस्त्यद्यनिघ्नं ॥ ४३ ॥ यदिवचनमुदारंश्रोतुकामोमदीयमजतनयविधेयं
कर्तुकामोसिनेतः ॥ वरयुगमधुनातद्दातुकामोभवत्वमसुरसमरकालेदायदत्थापविध्धः ॥ ४४ ॥ विलुलितरतिरूपेकिं-
स्वरूपौवरौतेयदयमहहसद्योदातुमीशोभवेयं ॥ वदयदितवशंकाज्यायसाहंशपेयंपिबतिबततवार्थेनाप्ययंवेत्यपेयं॥४५॥
हृत्पद्ममस्यानरराजसूनुर्व्याहाररश्म्युत्पतनात्प्रफुल्लं ॥ ववामजीर्णेतरमास्यपत्रोद्गलन्मरंदाशयमुत्तरंगं॥४६॥एकेनरामो
वनमद्ययातुमन्वब्दपर्यंतमितश्चरिष्णुः॥पद्भ्यांसचीरोभरतोपिराज्यपदाधिरूढोभवतात्परेण॥४७॥व्यालीवसाकेकयराज
कन्यासंदश्यदंतेनवरेणकर्णे ॥ व्यत्यस्यदेहंक्षितिपस्यभाषाविषंनिचिक्षेपसतन्मुमूर्च्छ॥४८॥ कैकेयिजिन्हेषिकथंनव
कुक्षेतुंगृहाद्राममुदीतमिछसि ॥ नेदंत्वयोक्तंनमयाश्रुतंतदनर्हमावांकुलसंभवौयतः॥ ४९ ॥ राजन्त्रीतिविधायचेतसि

१ अंगंगात्रेप्रतीकोपाययोःपुंभूम्निनीवृतीतिमेदिनी

निर्जेमास्मप्रलापंकथाःकुल्योसीतियदुच्यतेपिभवतावाङ्मात्रमेतद्भवेत् ॥ अंकापेतमिदंकुलंप्रवितंतंसौरंतदेतत्पुनः क
र्तुंतेनयुतंयदिछसिसुतंगूढंविधातुंगृहे ॥ ५० ॥ अगूढमेनंपुरतस्तवायंपाप्माप्रभूतःकुरुतेनिगूढं ॥ तमेवदूरीकुरुपश्यप-
श्चादगूढमूरीकुरुपूज्यवाक्यं ॥५१ ॥ सतीभवेद्यस्यमतिःसपूज्योग्राह्याक्रियातस्यवचोपिसह्यं ॥ निगूढमेषापिचबुद्धिरूढं
कर्तापिनासौवचसाविकर्ता ॥ ५२ ॥ अमुनावचनेनतेसुबुद्धेदमुनामानसिकोनुभूयते ॥ यमुनास्यतुल्यभाषितेनाप्यधुना
यंनचभीरुशाम्यति ॥ ५३ ॥ सर्वेषुपंकजवनेषुसमुल्लसत्सुनास्त्विदीयमधुनाह्रदयंपयोजं ॥ बोधंनयातिसकलोपिजनःप्र
बुद्धोनात्याग्रहोभवतिभव्यतयाजनेषु ॥ ५४ ॥ वस्तूनियान्युपचितानिभवंतिराजंस्तैरद्यकारयभृशंभरताभिषेकं ॥ रामंव
नायपरिधापयचीरकेणकृत्वेदमद्यपरिमोचयचस्वमंजः ॥ ५५ ॥ पतामितेपादतलेप्यनर्हेयाचाम्यहंयद्यपिभूपजन्मा ॥
निग्राहमेनंत्यजकेकयित्वंददामितेरामभृतेसमस्तं ॥ ५६ ॥ राजन्प्रजल्पसियथाजगतीपतीनांमूर्धन्यतामनुभवन्नपिरा-
घवोपि ॥ निर्वर्तयस्यपितथानयदिप्रकाममात्मानमद्यपरिपातयितास्यधस्तात् ॥५७ ॥ उपजापविनाकृतंमदीयंनचतेना

॥३२॥

प्युषतापसंयुतं ॥ युगपद्गृहमद्यतद्युतंतद्यदिबुध्धौनविमृश्यतेत्वया ॥५८॥चेष्टसेयदितथानतवेष्टंसृष्टमस्तिविधिनाबहुक
ष्टं ॥ भासतेममतथाविधमेतद्यत्प्रदायपुनरिच्छासिहर्तुं ॥ ५९ ॥ विधिनापरिणीयसत्कुलीनांभवतींकेकयराजकन्यकां ॥
अनुभूयतएतदेवदुःखंसुतजन्मेतिनविस्मयायाकिं ॥ ६० ॥ आस्तामिदंकेकयिरामचंद्रंसंद्रष्टुमिच्छामिगुणैरनूनैः ॥ पूर्ण
मदभ्यर्णगतंविवर्णआर्णेनधर्मेणयथानिबध्धः ॥ ६१ ॥ इतिबहुविलपत्यानयराममित्युक्तवतिउदितेभगवतिविवस्वतिपौ
रजानपदमुनिजनैःसहसंभृतसंभारेतत्रभगवतिवसिष्ठेआगत्यप्रस्तुतस्तुतौसूतेसुमंत्रेलंस्तवेनगच्छानयराममितिधिक्कृते
तस्माद्देशादपक्रांतेमंत्रयमाणेनसमग्रारजनीअपवाहितात्हर्षेणतद्गच्छत्वरितंराममानयेतिवदंत्यांकैकेय्यांराजाज्ञामंतरेण
कथमानयेयराममितिराज्ञापुनरुक्तःसुमंत्रोपिराजालिंदादरविंदान्मिलिंदइवनिर्गत्यराजसंदर्शनलुब्धंजनवृंदमवलोक्यम
करंदलुब्धइवपुनरपिराजानंबुबोधयिषुर्नास्तिनिद्रितोद्रुतमानयराममितिपुनरपिप्रत्युक्तोवरूथिनारथेनसारथिःपथिजन
ततिंप्रथितांविलोकयन्दशरथस्यज्यायसःसुतस्यावसथमभ्यागतोद्वास्थैर्निवेदितःकिंकथयतप्रथितमितिरामादेशेनप्रवेशि

तःसीतासहितंराजसुतंराममवलोक्यपिताकैकयीसहितस्त्वामामंत्रयतेइत्युत्क्काबध्धांजलिःसविध एवतन्मुखेदृशंनिदधौ॥ सीतेसुमंत्रःप्रहितोस्तिराज्ञावनायगच्छत्वरयेतिभूमेः॥ अस्याःप्रबुध्धेनहिमध्यमांबोपदेशतोयामिसुखेनतिष्ठ ॥ ६२ ॥ दुष्टान्विनेतुंसहिदंडकाप्त्यापातुंचशिष्टान्दययेतिशिष्यात् ॥ कुरंगशृंगाजिनवल्कतुंयंद्रक्ष्यामिदिष्ट्येतिसयातुनाथं ॥६३ संगृह्यतंलक्ष्मणमप्यदूरेसमेघनादेनमहारथेन॥संयुज्यमानंविजयायनाथाप्यभ्येहिरक्षःस्फुरितंस्वशक्त्या ६४ आस्थाय रामोथरथंसलक्ष्मणोमार्गेश्रियंनागरिकींविलोकयन् ॥ शृण्वन्स्वकीयानरयोषितोदिताकथाजगामाधिनिवेशनंपितुः ६५ निवेशनेयःसमभूत्सुपेशलोरामस्यधुर्येणकनीयसासह ॥ सएवराज्ञःसदनप्रवेशनेदक्षःप्रतीहारवरोबभूवहि॥६६॥ तदनु तत्रगतःसतुराघवःशुभमनाःपितुरंघ्रियुगंविभुः ॥ तनययाश्वपतेःसहतिष्ठतोभुविननामसुतेत्यभिवीक्षितः ॥ ६७॥ कैकेय्यपूर्वाकिमिदंप्रदृश्यतेसयोपराधेममसुप्रसन्नधीः ॥ आसीत्किमेतद्विकृतस्त्वयापिवातथोदितस्यादयमद्यभाषितैः ॥ ६८ ॥ नव्याधितोयंनगृहीतआधिनानाद्यप्रलापैःकटुभाषितोपिवा ॥ प्रदायदेयंकिलदत्तपूर्वकंधुनोतिशीर्षंतवहार्दविक्ष-

टीप कुरंगशृंगोमारीचस्तस्याजिनंतद्वान्वल्कलेयस्यसः० २ द्वारिहास्थे ॥ छ ॥ ॥ छ ॥ ॥ छ ॥



तः ॥६९॥ यदर्थमास्तेभ्यमितःपितामेपराक्रमेयस्त्रिदशेंद्रतुल्यः ॥ पतेयमग्नौनिपतेयमंजोधरातिपिबेयंगरलंतदर्थं ॥७०॥ प्रब्रूहितेभीप्सितमर्थमद्ययदर्थमास्तेयुवयोर्विवादः ॥ नादेयमद्यास्तिपितुर्ममापिनादेयवद्धयतयेतिसर्वं ॥ ७१ ॥ प्रियतयाजनकोपिवशीकृतोगुणगणैःसकलोपिजनव्रजः ॥ किमुवदामिददामिसुतेतियत्त्वमवद शृणुमद्वचनंततः ॥ ७२ ॥ दैवासुरेसमरकर्मणितावकीनस्तातोवितःप्रतिभयाशुमयेतिहेतोः ॥ वारंयुगंशिशुवरापितयातदद्यसंगृह्यतेयदिकुतो-विवशेनश्राव्यं ॥ ७३ ॥ किंब्रूहिभोयदिचपृच्छसितच्छृणुत्वमेकेनराज्यपदभाक्भरतोमदीयः ॥ अन्येनदंडकवनेनव पंचचाब्दान्वस्तव्यमेवमुनिनाकृतिनात्वयेति ॥ गच्छेददेयमपिदेयतयाप्रवृत्तिंकैकेयिदेयमपिदेयमिहात्रचिंता ॥ कादेविपात्रमहमद्यनहीक्षितोस्मियश्चत्वयापिजनकेनपुरैवनोक्तः॥ ७५॥ पुरापिनैवावददेषराघवोयद्वाच्यमध्यात्वमपिप्रभाषसे ॥ मामप्ययंभ्रांततयानिरीक्षतेदुःखाकरोत्येतदतीवमामयि ॥ ७६ ॥ संजाघटीतीदमपित्वदुक्तंभूयांचचीरेणपटीजटीति ॥ वर्षाणिषट्षट्द्वयसंमितानिवत्स्यामिनूनंविपिनेपिसोहं ॥ ७७ ॥ पितुर्गृहीष्येतवसंनिधानेगत्वापिमातुः-

टीप १ नद्यांभव ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

शरणंतदाज्ञां ॥ सीतांस्त्रियंस्वामनुनीयराज्ञिगच्छामितूर्णंसुखिनीचिरंस्याः ॥ ७८ ॥ इतिराघववाक्यपूर्णचंद्रोदयतः
केकयराजकन्यकायाः ॥ नितरांप्रमदोदधिःसुपूर्णःपरिवृत्योत्तटतांतदाजगाहे ॥ ७९ ॥ राजातवास्तुभरतोममतेन
मोस्तुगच्छंतुमातुलकुलाद्भरतंतुदूताः ॥ आनेतुमत्रभवतीसुखिनीयथास्यादित्येवमातृगृहमभ्यगमत्सचोत्का॥ ८० ॥यो
ह्यस्मदीयंकिलकार्यजातंपित्राऽनियुक्तोप्यकरोदभीष्टं ॥ प्रवत्स्यतेतेननिरागसाचेत्कृतंनियत्येत्यवरोधऊचे ॥८१॥ अंतः
पुरंमातुरथाशुगत्वासंतर्पयंतींद्विजवर्यसंघैः ॥ हुताशनंस्वस्यभवायरामोददर्शमूर्ध्नाप्रणनामतांसः ॥८२॥ स्यस्त्याप्नुहि-
त्वंसुतयावदिच्छंभूमौविहारायभवातिदक्षः ॥ कक्षास्थितस्तेभवताद्विपक्षोवक्ष्यामिसर्वंभवतात्तवायुः ॥८३॥ प्राज्यैर्गुणै
रामसयौवराज्येसज्जोयतेथाःसुत्हृदांसुखाय ॥ तिष्टस्वपीठेलघुभुंक्ष्वकिंचिद्वेलाबृहत्याक्रिययाव्यतीयात् ॥८४ ॥ नत्वं
विजानासिपितावदन्मांजटीचचीरीवसतात्सुघोरे ॥ भवान्वनेब्दानवपंचयावद्राजापिभूयाद्भरतःपदेमे ॥ ८५ ॥ तदनुवि
कचप्रसूनसुरुचोरामचंद्रवदनारविंदादनारतंनिष्कवचेवर्ष्मणिपतंतीमपारांशरधारामिवत्हृदयकुहरमभिव्याप्यसकलं-



शरीरंसंतापयंतींवाचमाकलय्यप्राचेतसपाशपरिगृहीतामाशरयुवतिमिवविचेतसंसुखोचितांप्रकृतप्रसंगेनुचितांवातेनमू
लतोप्यपचितांमोचामिवशोच्यांदशामापन्नांविसारिकचांव्यत्यस्तवसनांस्वजननीमंभसापरिषिच्यचेलांचलजनितवाते
नचंचलामालोच्याचलातलादुत्थाप्यताभिस्ताभिर्वचनरचनाभिःकिंचित्कृताश्वासनांसुस्थितवसनामारचय्यशनैःशनैरघु
राजसूनुरासनमानयामास ॥ ८॥ मातःकिमेतत्तववीरपत्न्यायत्तेजसाधिकृतिमापुरन्याः ॥ गतोनचानंदभरस्त्वदीयोयन्नं
दनस्तेहमितोपिकिंते ॥८६॥ जपानहोमानचतत्रतत्रमहामहिम्नांनचदेवतानां ॥ समर्पितोभूदुपयाचितंयोबालिःकिमेतत्सु
तयत्वदर्थं॥ ८७ ॥ याभिर्वंध्यतयादिनानिबहुधानीतानितासांसुखान्याभीलिंयदमानवत्वमापितत्सह्यंभवेत्तादृशं ॥ अ-
स्माकंयदवंध्यतास्तिरुचिरातस्याःफलंपकृत्रिमंरामाघ्रात्यनुभूयतेत्वयिसुतेकिंवेतरासांसुखं ॥८८ ॥ आजन्मनःकेकय
जानिमित्तंसोढंमयादुःखमतीवराम ॥ जातेत्वयिस्यादितिदुःखनाशआशागतासापिवनंगतेया ॥ ८९ ॥ अत्रांतरेल-
क्ष्मणोवीरलक्ष्यांवाचमुवाच ॥ स्वधामतोराममयंव्यवासयन्निर्हेतुकंनोजनकोतिकामुकः ॥ तत्धामतस्तस्यकरोमिमार्गं

टीप—१ कष्टं २ प्रजयाहिमनुष्यःपूर्णःइतिश्रुतेः ॥ छ ॥ ॥ छ ॥ । छ । । छ ॥

णैःसहेतुकंमातरहंविवासनं ॥ ९० ॥ भ्रातुस्तवेदंवचनंत्वयाश्रुतंयदेषधीरोप्यपहायभीरुतां ॥ ब्रवीतिमांत्वंसयथाद्य-
भीरुतांनतातगच्छेर्विपिनंतथाकुरु ॥ ९१ ॥ त्वमद्यमांचेदपहायगच्छेरमातृकंपश्यसितातलोकं ॥ पूज्यस्तवायंरघुनाथता
तस्तस्याग्रतोहंविधिचोदनायाः ॥ ९२ ॥ सुदुष्करंमामवदत्पितामेतथापितस्यास्तिवचोनलंघ्यं ॥ गच्छामिरामस्यभृगोः
सुतस्यसद्योपिपद्यामपिसागराणां ॥ ९३ ॥ मय्येवहार्दादिदमुक्तवांस्त्वंजानेपरंसाधुपथातिगंतत् ॥ क्रौर्यंहिधर्म्यैपथिनो
पयुक्तंधर्मःस्वभावान्मृदुतांगतोस्ति॥ ९४॥यदुक्तवांस्त्वंमयिहार्दभावात्सोढंमयालक्ष्मणतावकीनं ॥ सर्वात्मनापूज्यतमो
गुरुर्नोयदाहसर्वंकरणीयमेत्र ॥ ९५ ॥ सोढंत्वयोपकृतमद्यमयिप्रकामंसुक्षत्रियोसिबतवैरिनिकारहेतुः ॥ स्थैर्यंत्वयावि-
हितधर्मतयात्वदीयंछेत्स्याम्यहंरिपुगणंजनकेनसाकं ॥ ९६ ॥ छिंद्यामहंभूधरमद्यतुंगंभिंद्यांसमुद्रंनिकषापिवेलां ॥
कुर्यामभिन्नेअपिरोदसीचनचेत्पितात्वामभिषेक्ष्यमीशः ॥ ९७ ॥ राज्यंहिधर्मिष्ठतयोपभोक्तुंवैरिव्रजःशांततयानदत्ते ॥ को
प्युत्थितस्तंनिगडैर्निबध्याभिषेक्ष्यसेपश्यबलंमदीयं ॥ ९८ ॥ इतिलक्ष्मणस्यवचनंसुमहार्थंप्रसुवानिशम्यगदितंसुतय-

स्त्वं ॥ वनमद्यगच्छसिचगच्छतृणौघानिवयच्छयच्छसिचमामपिवन्हौ ॥ ९९ ॥ नपतिव्रतयाविहायकांतंविबुधैःस्थेय
मितीववर्णितं ॥ रुदतीमितिचैकतोवदन्सप्ररुदंस्तामनुनीतवांच्छनैः ॥ १०० ॥ भूतानिपंचभवतःपरिरक्षणाययत्रक्वचा-
पिचरतःप्रभवंतुतानि ॥ ब्रह्मांडगोलसहजाःकिलदेवतायाईशेनसाकमपिरामवनंप्रयाहि ॥ १०१॥ यत्प्रेममद्विषयकंत्वयि
तत्तदस्तुत्वय्येवयन्मयिभवेदपितावकीनं ॥ निक्षिप्तमद्यपितृशिष्टितआगतस्त्वंसंधांसमाप्यचपुनःप्रतिदत्स्वमह्यं ॥ २ ॥
रघुराजबालजगतःसुदिनाहंतवजन्मकालिकमितिप्रथमानं ॥ कृतकार्यएवसदनंसमुपेयाः सखितोवनादहमवैमितदात
त् ॥ ३ ॥ तदनुप्रस्थातुकामायरामायकृतकल्ययाकौसल्ययावनायप्रहितोदशरथसुतोविहितमात्रभिवादनस्तत्सदना
न्निर्गत्यतद्देवत्द्दिकुर्वतींचंद्रवदनांकृतदेवतावंदनांदर्शनमात्रकृतचंदनरससंनिषेकांद्रष्टुंवनगमनायप्रष्टुंस्वगृहंगंतुमुपच-
क्रमे ॥९॥ आयातमेनंरघुराजसूनुमवेक्ष्यसीतास्वपतिंतदानीं ॥ संभ्रांतचित्ताविपरीतदृष्टेःप्रष्टुंप्रवृत्ताभवदग्रदेशे ॥ ४ ॥
सतिपुष्येकिमितिशुष्यतितेमुखचंद्रः प्रचलाकमिवमयूरःकिंकरश्चंद्रप्रतीकाशंशतशलाकंच्छत्रंशिरसिनकरोतिनचभव्या

भ्यांव्यजनाभ्यामभिवीज्यसेनचवाचित्वच्चरितपूतैः सूतैरुच्चरितस्वस्वामिकृताहितास्कंदनैर्बंदिभिस्तत्कालप्रबंधरचनाकृत
मेधैर्मागधैर्नाभिष्टूयसेनचाम्नायादिष्वधीतिभिर्भूदेवैर्देद्यामधुनाप्यधुनाभिषिक्तोदृश्यसेनचकृतालंकारविधानाश्रेणयस्त्वा
मनुगंतुसर्वतःप्रधावंतिनापिप्रजविवाजिकृतयोजनःशतांगोनापिगिरिसन्निभोमातंगोनापिगृहीतभद्रासनःकिंकरइतिपृछं
तींसीतांरामःपृच्छातिभवतभ्रांतेवराजकीयंयच्छातिमह्यंवनगमनंकैकेयीच्छयाजनकइतिसपरिकरमुत्काकिंचिदनुशशास
॥१०॥ कुपिताभवमाविदेहजातेवचनंभीरुहितंनिशामयत्वं ॥ स्वपदेभरतोरतोहिभूयाद्विरतोमेनुतितस्तथानकार्यं॥५॥
गुरुजनंप्रतिमानयमानिनिप्रतिपदंनचमानयमानसं ॥ कुरुघनोरुसुरापाचितिंपरांभवतियोपचितौभविकस्यहि॥ ६ ॥ भ
वतुमाभविकंनविकंपतेत्व्हदयमीषदपिप्रतिसाध्वसात् ॥ प्रतिपदंनचमानयमानसंत्विवितियथावचनात्तवराघव ॥ ७ ॥
नवनितेवनतामयिसर्वदाविनयतोभवतीभवतीतिन ॥ अतइदंवचनंव्यसनोद्भवाच्छृणुमयासकृदुच्चरितंसखि॥ ८ ॥ प्रकृ
तितोपिद्दढत्वमुपेयुषांविकृतिकृद्भवतीहवनेगतिः ॥ तवनिरीक्ष्यतनोर्मृदुतांमयातदुदितंसखिकल्पयमान्यथा ॥ ९ ॥ य

टीप १ कल्याणोपचये ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

द्यस्तिराजाजनकःसतीनांरंकोपिरंकःपतिरस्तिराजा ॥ विज्ञायसर्वंयदिवाभवाद्दग्विकल्पदक्षोभवितादितंनः ॥१०॥ अ-
भ्यागतोजात्वपिपुंडरीकोवनेविशालेरहितेमनुष्यं ॥ निमेषणोन्मेषणतोनिहंतितस्माद्वनंदुःखतरंप्रसिध्धं ॥ ११ ॥ नीरंध्र
भावंगमितेप्यरण्येतालैस्तमालैरपिवाविशालैः ॥ भयंनमेस्यात्किलपुंडरीकाद्यत्पुंडरीकाक्षतयास्थितिस्ते ॥ १२ ॥ वनेच
राणामधिपान्नरोद्भटात्किरातराजादपिवानरोत्तमात् ॥ भयंतवस्यादपिचेन्मनोरमेतस्माद्वनंदुःखतरंब्रवीम्यहं॥१३॥ न
मेत्वदुक्ताद्भयमस्तिजातुसदाधनुर्धारिणिवीरवर्ये ॥ त्वयिस्थितेमन्निकटेकदाचिद्भयंयदिस्याद्भवतात्तवारेः ॥१४॥ प्रया
हिसीतेवनमद्यसार्द्धंमयायतस्तेमनसेस्पृहास्ति ॥ वाढंत्यजेयंकिलमामकीनांच्छायामपित्वांनपुनस्त्यजेयं ॥१५॥ प्रा
गागतस्तत्रसलक्ष्मणस्तंश्रुत्वाविवादंचतयोस्तदानीं॥ व्यज्ञापयत्स्वस्यवनेविधेयोगत्यर्थमेवंकिलरामचंद्रं ॥ १६ ॥ भर
तेनसहास्तितेनुजातःसतुराज्येभविताधिकारवान् ॥ सुखिनौभवतंयुवांकुतस्त्वंवनवासायमयासहेच्छसि ॥ १७ ॥ ममा
नुजोयद्भरतंप्रयातस्त्वामाश्रितोयद्यहमस्मिराम ॥ नतेनचित्तेभवतात्तवेदंयदूर्जितस्तेनसुखीभवावः ॥ १८ ॥ भरतःस-

टीप १ व्याघ्रः ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

मवाप्यराज्यमृध्धंजनयित्रीवचनेस्थितःकदाचित् ॥ भरणंतुसुदुर्लभंभवेच्चेन्ममामात्रोरितिभोनिषिध्यसेहि ॥१९॥ भर-
तोनतथाविधोभवेत्सन्यादिजातःशृणुनिश्चितंवचोमे ॥ जननीमपितंचसाह्यकर्तॄनपिसर्वान्विगतायुषःकरोमि ॥ २० ॥
भावंवुभुत्सुर्वचनंतदीयंनिशम्यरामःपुनरब्रवीत्तं ॥ आपृच्छ्यसर्वाननुगमनेवनायसार्धंमयालक्ष्मणतद्यतस्व ॥२१॥ सर्वे
भवामोवयमद्यनिःस्वाःस्छातुंवनेतेनसुखीभवामः ॥ तदर्थमद्यैवसुयज्ञमृध्धमन्यान्विधातुंद्रुतमानयस्व ॥ २२ ॥ वसिष्ठ
सद्मन्यसिचापतूणीमुखंसमस्तंममशस्त्रजातं ॥ तदानयानेनपदेनगत्वागच्छावएवंवनमद्यशीघ्रं ॥ २३ ॥ आस्थापितं
तंपुरतःसुयज्ञंसौमित्रिणान्यैरपिविप्रवर्यैः ॥ समीक्ष्यरामोवसुधारयाससंतर्प्यसर्वान्प्रहितंचकार ॥ २४ ॥ घनाघनो
दिष्टवशेनलब्धोवसुंधरांसद्वसुभिःसमृध्धां ॥ करोतियद्वद्यदधात्सरामोयतोभवद्राघवराजवंश्यः ॥ १२५॥ इतिश्रीमद्वां
तकुलावतंसजगन्नाथात्मजलक्ष्मणविरचिताभिनवरामायणचंपूकाव्येचतुर्थस्तबकः ॥ श्रीदत्तात्रेयार्पणमस्तु॥ ४॥ तदनु
सीतयाविद्युतापुरोवातेनसुमित्रासुतेनसूचितमद्रितटादिवस्वप्रासादान्निर्गतंसर्वदशः शीतलयंतंगवेंद्रनिदेशेनसदेशेस्थि-



तांवसुंधरामिवकैकेयींसुसौहित्यांविधातुकामंघनमिवश्यामंराममवलोक्यसनिमेषणोन्मेषणेनेक्षणमात्रेणजनितैरब्दबिं
दुभिराप्लावितानांव्यत्यस्तानांसमस्तानांयत्रयत्रायंतत्रतत्रवयमितिवदतांजनानांयत्रनायंतत्रननगरंनापिराष्ट्रंनापिरा-
जा।।पिकश्चित्कंचनावलोकयेत्किमनेनबहुनावचनेननतत्रवृषदंशकोनमूषिकोनकाकोनोलूकोननकुलोनबिलेशयोवाभ-
वेदितिप्रातिरथ्यंतथ्यंजनवचःश्रुतिपथ्यंश्रृण्वन्सरामोंगीकृतसत्पथंदशरथंवनगमनायप्रष्टुकामःशनैःशनैस्तदंतःपुरद्वारमा
गत्यतत्राधिष्टितंसुमंत्रंनिवेदयास्मान्राज्ञेइतिसंज्ञयासूचयामास १। निवेद्यराजानमसौसुमंत्रःप्राप्तंप्रतीहारभुविस्छितंतं
॥ तदाज्ञयांतःपुरमृध्धमारात्प्रावेशयत्तंदद्दशुस्त्रयस्ते ॥१॥ राजापिचत्रीनपितान्निरीक्ष्यसुमंत्रमध्धावददानयस्व ॥ दारानि
मंकैकयजानिमित्तंपश्यंस्त्वरण्याभिगमेप्रवृत्तं ॥ २ ॥ सुमंत्ररामानयनेनियुक्तःकुतोमदाज्ञानुपदंचकार ॥ भवान्नचेतिप्रल
पंतमायँतवेत्ययंदृष्टिपथेसउँचे ॥ ३ ॥ दृष्ट्वातदानीमजनंदनोसौद्वाभ्यांसहस्वासनतोजवेन ॥ उत्पत्यरामंसमवाप्यनापि
मध्येप्रपत्यैवभृशंविमूढः ॥ ४ ॥ त्रयस्तदानींपरिगृह्यबाव्होराजानमध्धाशयनीयनिष्ठं ॥ चक्रुस्त्रियोराममिनादमुच्चै

भूँषानिनादेनसमंततोपि ॥ ५ ॥ वातादिनाश्वस्तममुंसरामोजगादभूपंवनमद्यगंतुं ॥ आज्ञापयत्वंवनितासमेतंकनीयसा
साकमितोजवेन ॥ ६ ॥ इतिब्रुवंतंनृपतिस्तमात्मजंगच्छेतिनिस्त्रिंशतयाद्यवाचया ॥ ब्रूयांकथंकेकयजावरद्वयप्रबत्धवाङ्
नेत्यपिसंशयंश्रितः ॥ ७॥ निगृह्यमांस्त्रीजितमद्यरामबध्वापिपाशैःकुरुराज्यमृध्धं ॥ कुलक्रमाप्तंनतुन्हीणतांत्वंगच्छेर्नि-
रागाहितथावरीयान् ॥ ८ ॥ यथास्थितोराघववीरराजाधीरोभवानस्तुवनंप्रयातुं ॥ त्वदाज्ञयोद्युक्तममुंनविघ्नैर्युतंविधातुं
कुरुमानसंत्वं ॥ ९ ॥ सपत्नभावेननिराकृतंमांमन्वंकवर्षेषुगतेषुपश्चात् ॥ राजन्सुखस्थःशृणुनिःसपत्नंपश्येरुदारांभुव-
माश्रितंत्वं ॥ १० ॥ वाग्मीसुमंत्रःकिलकेकयात्मजामुवाचकैकेयिकृतंत्वयाशुभं ॥ कन्याथवामातरमेवगच्छतीत्ययंप्रवा
दोवितथःकथंभवेत् ॥ ११ ॥ अत्रांतरेवाचमुवाचभूपोवनंसमायांतुसुतेनसाकं ॥ हस्त्यश्वपादातरथादियुक्तारूपाभिरू
पावणिजःस्त्रियश्च ॥ १२ त्वचःप्रदातापरिगृह्यसारंभवान्मयाचेद्विदितोभविष्यत् ॥ नयाचितोराघववंशयराजन्वरद्वयं
दात्ततयाभविष्यत् ॥ १३ ॥ नैवंवचस्त्वन्मुखतोस्तियोग्यंनचापराध्नोतिसुतोमदीयः ॥ नाहंकथंमांप्रबलोविपत्तेस्त्रायेतप-

टीप १ अंतरिक्ष ॥छ॥ ॥छ॥ ।छ। ।छ।



श्येयमहंतमद्य॥१४॥ मयापरित्यक्तमिदंहिराज्यंकिंत्वांहिनीमांप्रतिभूषयेत ॥ प्राज्यामिलिष्यंतिवनंगतस्यनवानराःखिद्य
सिकिंत्वमद्य ॥ १५ ॥ ग्रामेस्तिसर्वंमृदुतद्विहायदत्स्वाद्ययद्यत्कठिनंहिभूप ॥ तेनैवजीवामनतेस्तुशोकोनयामकालंप-
रिधायवल्कं ॥ १६ ॥ इतिरामवाक्यसमनंतरमध्यापरिगृह्यवल्कलचयंपुरतःसा ॥ करमाकलय्यतनयस्यतदानीमददाज्ज
नेपिनिरपत्रपमाणा ॥ १७ ॥ तदैवरामःपरिधायवल्कंपत्न्यैददौसाकुशलानधर्तुं ॥ लोकस्यनेत्राश्रुजनौतदानींविदेहजा
ताकुशलाबभूव ॥ १८ ॥ धर्तुंनचीरंकुशलेयमास्तेदक्षाकथंस्याद्वसितुंहितस्याः ॥ इतीवरामःपरिगृह्यचीरंकौशेयकस्योपरि
तद्बबंध ॥ १९ ॥ गृहीतचीरामवलोक्यसीतांनार्योब्रुवन्राममपेतधैर्याः ॥ नजातुसीतावनवासयोग्यात्वंगच्छसार्द्धंबतल-
क्ष्मणेन ॥ २० ॥ तदात्वेरामभद्रहस्तकृतंसीतावल्कलबंधमवलोक्यक्रोधाविष्टोवसिष्ठोमास्मकैकेयिविकृतंकृत्यंकृथास्त्वं
यदर्थमेतत्करोषि॥परिषद्यःपुरुषवरोनिष्यात्परंविषीदेन्नकेवलंसएववयमपीतित्यजानिर्बंधंगृहाणशिष्टपद्धतिंदत्स्वतस्यैप्र
वेकानिकौशेयानिपरिष्कारान्यापयदासदासीराजवरारोहेकुरुचेतसिसुखप्ररोहमारोहयात्मानंवरार्हाणांधुरमितिवाचं-

१ सेना २ नद्यः ३ स्थाली ।छ॥ ॥छ॥ ॥छ॥ ॥छ॥

विरचय्यविरराम ॥ २ ॥ गंतुंप्रवृत्तोविपिनायरामोवाक्शीर्षमेनंपितरंबभाषे ॥ गच्छाम्यरण्यंममपालनीयामाताविरोधे
त्वमुपाश्रयोस्याः ॥ २१॥ राजापिवाचंकरुणांनिशम्यरामस्यन्हीणोवददेवमेतत्॥रथंसुमंत्राशुनियोजयस्वयतस्त्वसाहाय्य
कृतोसुतस्य ॥ २२॥ ततःसुमंत्रोपिजवेनयुक्त्वाहयान्रथंतत्रसमानिनाय ॥ राजेंद्रसज्जोरथइत्यवोचद्बद्धांजलिस्तन्मुख
मीक्षमाणः ॥ २३ ॥ आहूयभौरिकंवरंनृपतिर्जवेनवध्वैवनेसहधवेनविवासकर्त्र्यै ॥ तावंतिचेलकवराणिचदत्स्वयावद्वर्षा
णितत्रवसतेर्गणितानिभूषाः ॥ २४ ॥ भूषाश्चवासोपितनौदधानांयथायथंमैथिलराजपुत्रीं ॥ आलिंग्यदोर्भ्यांविपिना-
ययांतींश्वश्रूर्वधूंतांप्रशशासवाचा ॥ २५ ॥ जनकनंदिनिगछवनेद्रुतंनिजधवेननियच्छसतीव्रतं ॥ यदिभवेत्तवपृछनिगू-
ढकंयदिविवृश्चसिद्धच्छयमंजसा ॥२६॥भवेद्विपन्नोयदिदैवकृत्यासंपन्नएवेतिमतिर्विधेया॥पारंपरीतोवचनान्मुनीनांस
र्वास्ववस्थासुपतिर्हिसेव्यः ॥ २७॥ जानामिनार्याव्रतमप्यजस्रंश्रृणोमिचार्याकथितंतुयच्च ॥ वार्याद्वुरध्वाद्गुरुभिस्तुना-
र्यश्चार्याःशिवार्याकथितेनयोधे ॥ २८ ॥ इतिस्वजनींहितमुपदिशंतीमिकतोरुदतींजरतीमपिसुदतींप्रसंगेपिपतिम-



तिरस्कुर्वतीमभिवीक्ष्यस्वतोविहस्तोपिहस्तेनतदश्रुपरिमार्जयन्रामोगमिष्यंतिसंभृतदुर्दशाश्चतुर्दशापिशरदोभविष्यति-
चतवापिसुदशाप्रशस्येतिपरदोवरदःसमाश्वासयन्सर्वासामपिपितृपत्नीत्वात्तामिवताआपिमातृर्योगिनीनामिवभवतीनां
नंदनायनास्यनंदनस्यभागधेयंनापिरूपधेयंपरमस्तिनामधेयमितिध्येयतयानुग्राह्योयथाभवेत्तथैवविधेयंयतोयंविधेयोत्र
स्तुतस्तुक्कजरन्नृपिताक्कभरतः क्वाभवत्यः सत्यः क्वेयमस्माकमापदथापिमत्कृतंक्षंतव्यमेवदुष्कृतनमंतव्यंमयात्ववश्यंव
नंगतव्यमितिप्रचुराभिर्वचनरचनाभिरनुनयांचकार॥३॥ लक्ष्मणस्तदनुमातरमध्धापृच्छातिस्मविपिनंप्रतिगंतुं ॥ सापि-
मांजनकजांपितरंतविद्धिरामभिदमित्यवदत्तं ॥ २९ ॥ तदनुसुमंत्राधिष्ठितरथमध्यमध्यारूढंसीतालक्ष्मणाभ्यामुपगूढंरा
ममनुगच्छन्नरवरोपिपौरनिकरेणद्वेष्यानस्मान्मत्वानिष्यसिरथंप्रेष्योसिनसेष्योसीतिप्रलपितंविषमिवकर्णाभ्यांशृण्वन्हा
रामेतिमुहुर्मुहुर्भाषमाणोबाष्पेणनेत्रेपर्याकुलयन्महताप्रयत्नेनशतांगेकौसल्यासुमित्राभ्यांधृतांगोविषयसुखमनुभवितु-
कामोयोगीपरशरीरंप्रविश्यतत्रसुखंनिर्विश्यपुनरपिशून्यांस्वतनुमिवायोध्यांमहताकष्टेनप्रविशन्नगच्छेयकैकयजागेहंन

यतमांकौसल्यागृहमित्युक्त्वापुनः पुनारामइतिजनमात्रेणकृतंनिनादंशृण्वन्कुर्वन्कौसल्यासदनेशयनेकौसल्यांदृशोर-
यनेविदधदिदमेवंविधमभिदधौ ॥ ४ ॥ कैकेयिकिंतेकृतमागईदृशंयत्तंप्रकृत्यापिमृदुंव्यवासयः ॥आलंब्यजोषंगृहमध्यु
वासयआस्तेनृशंसप्रकृतिर्हिताद्दृशी ॥ ३० ॥सूतैर्विबोध्यःसतुजंबुकौघैःस्वाप्योपितूलैःसचपल्लवाद्यैः ॥मृष्टान्नभोज्योवन
जासुयोज्योयदोषधीषुप्रसभंकथंहा ॥ ३१ ॥ निर्लिप्तगात्रःसुखचंदनेनविलिप्तमूर्तीरजसाकुजेन ॥ भुजेनकृत्वाप्युपधान
मेषशय्यांविदध्यात्कथमस्मिकुर्यां ॥ ३२ ॥ अहंविवत्सायदभूवमस्मान्मयाविवत्साबहवःकृताःकिं ॥ गावोप्रतीपंकिलदै
वमस्तियतःसवत्सेत्यपिवक्तुमर्हा ॥ ३३॥ ब्रवीषिकल्याणिवचोपिदीनंयतःसुतोदीनजनाधिपाता ॥ गच्छेदनेहायमितः
शुभंस्यात्कनीयसीत्याहयतःसुमित्रा ॥ ३४ ॥ रामोपिपौरान्बहुभिर्वचोभिर्निवर्तनार्हान्नकरोत्तथापि ॥ नतेजनास्तंमुमुचु
स्तदानीमश्रूण्यदस्राणिपरंक्षणेन ॥ ३५ ॥ परेपित्रादयःसर्वेतमःप्राप्नुयुरंजसा ॥ विनास्मांस्तान्तेरामवयंतामसमाश्रि
ताः ॥ ३६॥ शयनंमृदुरागाढ्यैःपल्लवैःपल्लवावधि ॥ व्यधात्सौमित्रिणासूतोदंपत्योरामसीतयोः ॥ ३७ ॥ दंपतीनिद्र



याद्रात्रिंपश्चाच्चक्रतुरादरात् ॥ सौमित्रिसूतावाप्रातर्वाचारामगुणाढ्यया॥ ३८ ॥ यावत्प्रबोधोनभवेज्जनानांतावन्नतेम
द्गतिमाप्नुयुर्हि ॥ इतीवसुप्तांछ्रितताममसांस्तान्प्रबोधकालाद्यजहात्सचार्वाक् ॥ ३९ ॥ विचिंत्यतस्मिन्गहनेवनेतेविलंघ्य-
भूयोप्यनवाप्यरामं ॥ क्षणैकसंगादपिबुध्दिपूर्वंगत्वागृहंतन्मयतामवापुः ॥ ४० ॥ अनुक्रोशंनिवासेनाप्युपक्रोशंसराघ
वः ॥ जनकस्यपथेशृण्वन्जनस्यमुखतोययौ ॥४१॥ अतीत्यदेशंरघुवीरभुक्तंस्वीयांपुरींप्रार्थितवानितीदं ॥ मात्राचपित्रा
सहसंगतःस्यांयायांपुनस्त्वांसमतीतसंधः॥४२॥ जटीचचीरीकृतसिंधुवंदनोयत्तापसत्वंसमवापराघवः॥ ततोनुकिंतापसत
र्वधस्थितोगुहाधिवासाधिकसौख्यवानभूत्॥४३ तदनुसजातीयनिवहैःसहितोहितानामसासहोगुहोपिश्रुतरामागमकृत्य
स्तत्तेजसाधिकृतइवसमंदंसंचरन्सगंधोगंधवाहइवमित्रतयादृशौशीतलयन्पादोपांतमागत्यप्रणमन्विनिवेदितसर्वरा-
ज्यउपानीतप्राज्यभक्ष्यभोज्योनियोज्यइवस्थितोपिबाहूसंयोज्यपरिष्वक्तोवलोकितंभुक्तमिवग्राम्योपभोगेपित्राज्ञयासक्तं
माजानीहीतिमृदुनावचसानुनीतोददातीतिषड्विधप्रीतिपरिपूर्तयेश्वानांघासेनार्थीतिपूजितश्चाहमितिज्ञापितविहितोको-

लक्ष्मणानीतपीतभागीरथीपाथसस्तत्रभगवतःकल्पितपल्लवतल्पेशयानस्यदाशरथेःपादोपांतप्रदेशमाश्रितःसौमित्रिणा
सत्रामित्रोदयपर्यंतंजागरितःकथितबहुविधतत्कथोबभूव ॥ ५ ॥ तदनंतरंविहितकालप्राप्तविधिकृत्योगुहानीतन्यग्रोध
क्षीरकृतजटाभारोमहताप्रयत्नेननिर्वर्तितसंदेशसुमंत्रगुहोरामःपरंपारंभागीरथ्यागंतुंनाविकृताधिरोहःस्वांपुरीमनंतरा
यनागमनार्थंत्रिपथगामुद्दिश्यकृतोपयाचितयासीतयालक्ष्मणेनसहितउत्तीर्यतस्याःक्रमेणचातीतबहूपवर्तनोहत्वापृषता-
नूवत्सानभ्यागत्यसंध्यामुपास्याभ्यवहृत्यवनस्पतिमूलेकैकेयींपितरमुद्दिश्यविलपन्लक्ष्मणेनकृताश्वासनःसीतायामिव
निद्रायामासकोधूर्तनायकइवप्रसक्तामपिरात्रिमतिवाहयामास ॥ ६ ॥ तदन्वभ्युदितेभगवतिभास्वतित्यक्तवनस्पतिः
सानुजातःसीतापतिःप्रयागेकृतवाजपेयादियागंसन्निहितशिष्यसमाजंभारद्वाजंमुनिराजमुपागम्याविनिवेदितस्वोदंत-
स्तद्दत्तकृतफलाभ्यवहारस्तत्रतांरात्रिमतिवाह्यतदनुज्ञयासंघाटेनशमनस्वसारंयमुनामुत्तीर्यक्रमेणविकटाटवीकंदृश्यमा-
नऋषिवाटंगगनचुंबिकूटंभयंकरातटंवटंसाक्षात्कृत्यदृष्ट्याचित्रकूटमुपेत्यलक्ष्मणेनाविरचय्यपर्णकुटींकृतवास्तुशमनोत्त्व-  ॥ ४१ ॥

द्वीप. देश  ॥ छ ॥  ॥ छ ॥  ॥ छ ॥  ॥ छ ॥  ॥ छ ॥

ष्टोमृगपक्षिजुष्टंविप्रवासंत्राण्याप्यध्वश्रमेणाविप्रवासजंदुःखंजहौ ॥ ७ ॥ आपृच्छ्यरामंसहसानुगंगंनिवृत्तमात्रेनगरायसू
तं ॥ विचुक्रुशुःपौरजनाःसुमंत्रंकरानमुत्सृज्यपुरीमितोसि ॥ ४४ ॥ संभृतेनगतवानसिसूतस्यंदनेननगरादजसूनोः ॥ यत्पु
रंविशसिरिक्तमनत्वंसुमंत्रवदकारणमत्र ॥ ४५ ॥ श्रोतुंनकर्णद्वयमासदक्षंवक्तुंनतत्त्वंवदनंप्रजाभ्यः ॥ श्रुतोपटुःसोपिवदा
वदःसन्ननेडमूकोह्यभवत्सुमंत्रः ॥ ४६ ॥ पारेगंगंसीतयालक्ष्मणेनसत्रायांतंकाननायाग्रधृष्यं ॥ कष्टांदृष्टिंबाष्परुद्धांहि
तस्माच्छोकाःशोकात्सन्निवर्त्यागतोस्मि ॥ ४७ ॥ नानास्यहंकेकयनंदिनींत्वांयुक्तांद्विवांकीर्तिमिवप्रकृत्या ॥ वरक्षुरेणांगजमद्य
वालंपृथक्करोतिस्मयतोमदीयं ॥ ४८ ॥ किमाहरामोपिकिमाहलक्ष्मणःकिमाहमांमैथिलराजनंदिनी ॥ सुमंत्रशीघ्रंवदयां-
तिमेसवोदयस्वद्दृशाभवत्तायतोहिते ॥ ४९ ॥ यांमातरिश्वापिनवादिवाकरोददर्शदृश्याशबरीभिरंजसा ॥ साजानकीव
न्यफलानिपाणिनावचित्यभुंक्तेस्वतआशनायया ॥ ५० ॥ शय्यासुरेखास्तरणस्ययस्यकाचित्कदाचिन्नसुखायपूर्वं ॥
आसीत्सरामोबतलोष्टदेशकथंसमीयाच्छयनस्यसौख्यं ॥ ५१ ॥ कथंसुमित्रातनयोप्यरण्येसुखंसमीयादितिचेतसोमे ॥

टी० १ वक्ता २ वाक्श्रुतिवर्जितः ३ चंडालः १० नापितः ४ शिशुप० केशं ५ बुभुक्षया  ॥ छ ॥  ॥ छ ॥  । छ ॥  । छ ॥

मोहोभवत्येवमहान्यतोसौसुयामिकस्तस्यसदासुमंत्र ॥५२॥ व्यजिज्ञपत्त्वांनृपरामचंद्रोविधायशीर्षेंजलिमादरेण ॥ त्व
यावितव्याजननीमदीयातयापिचान्याभरतेनसापि ॥५३॥ वरस्यदानेनभवान्व्यधत्तवैरामस्यदानंत्वदयोन्नतेर्यतः ॥ ना
दानमंजःकृतिनोपियावतस्तवापदानस्यवचोपिलाक्ष्मणं ॥ ५४॥ तदातिदुःखाज्जनकात्मजामांनिरीक्ष्यनिश्चेष्टतयाप्य
वस्थिता ॥ पृष्टाश्रुभिःसाप्रतिवाक्यदात्रीबभूवनेतोविनिवेदितुंक्षमं ॥ ५५ ॥ अश्वास्तदीयाःपशवोपिजात्यारथ्याव्यमुं
चन्परितोश्रुविप्रुषः ॥ अनूपदेशस्थितवृक्षसंघोग्रीष्मोष्मसंशोषितवद्यभात्तदा ॥ ५६ ॥ कुतोगतामेप्रतिभातदानींनाहं
व्यधांवृत्तमिदंसमस्तं ॥ कस्यापिकर्णेननुतस्यपाकोदुष्कर्मणःप्राप्तुमतोस्तियोग्यः ॥ ५७ ॥ कौसल्यापितदावाक्यैःशो
कजैर्धरणीपतेः ॥ सूचीव्यथांव्यधात्तेनशोकमापसराघवः ॥५८॥ नदेविवाक्यैर्वितुदाधुनात्वंनमांपुरैवंक्वचिदप्यवादीः॥
॥ मृतंनमांमारयनैषधर्मएषोंजलिर्मेविहितोयतस्ते ॥ ५९ ॥ शोकव्याकुलयाबुध्याब्रुवंयत्कांततादृशं ॥ क्षमस्वममदौरा
त्म्यंक्षमासाराहिसाधवः ॥ ६० ॥ देविनेदमपितावकमागोमामकीनमितितावदवेहि ॥ यन्नरोह्यकृतदुष्कृतकर्मानाप्नुते

फलमतीवकठोरं ॥ ६१ ॥ सुतमामिहादयविहायसमागायदरण्यामित्यसंदृशंनतवत्वां ॥ यदसुप्रकृष्टमहमत्यजमपघनज
हामितान्कथमितिव्यजहात्सः ॥ ६२ ॥ तदनुताव्यलपन्नृपतिस्त्रियःप्रतिनिरीक्ष्यनृपंगतजीवितं ॥ सुतमृतेसचिवानचसं
स्कृतिंविदधुरस्यतनुंतिलजेद्रवे ॥६३॥ प्रव्राजितेकेकयजानिमित्तंरामेध्यरण्यंविषयेपुरेन ॥ शरार्यशोकःसमभूत्परंतूद्याने
भिधानेनतरुःसचापि ॥ ६४ ॥ तदन्वितिकर्तव्यतामूढाःसर्वेपिसचिववरामार्कंडेयादीन्पुरस्कृत्यभरतानयनेगृहीतवसि-
ष्ठोपदेशास्तदैवतदानयनेसंदेशहारिणःप्रेषयामासुः ॥८॥ राज्ञाहूतोसिभरतसर्वेकुशलमब्रुवन् ॥ तूर्णंयाहीतिनगरंसं-
देशंजगृहुश्चराः ॥ ६५ ॥ तदनुतेगृहीतसंदेशादापनीयैर्वसनादिभिःसंदेशमशून्ययंतःसंदेशहरास्तंदेशमतिक्रम्यअन-
भ्यवहाराअश्वपतेरुदवसितेचिंताजडंभरतमुपेत्यदापनीयानिप्रत्यर्प्यपृष्टदत्तोत्तरकुशलास्तंगृहागमनायात्वरयन् ॥ ९॥
वत्सास्नेहेत्वदीयोजगतिमातिमतामग्रणीःसंस्थितः सन्नास्तेमातासमंताद्भवसकलजनानभ्यतेच्छुस्त्वदर्थे॥ मन्वब्दांतंस्वग-
त्याचरतुचविषयेदुर्गमेरामचंद्रःसर्वावस्थांगतोपिस्वनगरधृतयेयाहितूर्णंससूनुः ॥ ६६ ॥ तदनुगृहीतयुधाजिदनुज्ञोभर

टीप १ प्रेष्णि प० तैले २ मृतः ३ संतोषाय प०तिपमनाय ॥ ७ ॥ । ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

तोराजसदनतोनिर्गत्यक्रमेणनदनदीस्तीर्त्वासप्तभिरहोभिरयोध्यांयथापुरमनवस्थितांपुरमवलोक्यनिरंतरदुःशंक्यमान
दुःखभरेणनिरंतरस्वांतरःपितुरगारेपितरमदृष्ट्वामातरमवलोकयितुंमातुरगारंप्रविश्यधृततच्चरणआर्यंप्रष्टुमुपचक्रमे ॥१०
आस्तेनमातःसदनेतदीयेनचापितेकुत्रगतःपितामे ॥ राज्येनत्वदृष्टासुतमाहपृष्टाप्रेष्ठांगतोभूतगतिंपिताते ॥ ६७ ॥ इ
तिवचःप्रसराहतविग्रहोग्रहगणाग्रहकृष्टइवापतत् ॥ तदनुसेक्षणिकाजननीसुतंह्युपचचारशनैर्वचनौषधैः ॥६८ ॥ मन
सिमेसमभूज्जननिप्रभुर्व्यधितराममथापिकरिष्यति ॥ बतपितायुवराजमुतेतितत्कथमभूद्विपरीतामिदंद्रुतं ॥ ६९ ॥ अ
यिपितामममयस्तनुमुच्छ्रितांपरिममार्जसदारजसावृतां ॥ क्वनुगतोनहिवेत्तियतःसमांप्रतिनिमार्ष्टिनवातमसावृतं ॥७०॥
अपिचकुत्रगतिर्जगतोगतिर्ममविशेषतइत्यपिमांवद ॥ जननितत्पदपंकजयोगतःस्वगतपंकधुतिंविदधामियत् ॥७१॥
नहिभवेदपिरामपदाद्वरंयदपिचंद्रपदंभवितोत्तरं ॥ यदपिचंद्रपदंभवितोत्तरंतदपिरामपदाश्रयतःप्रसूः ॥७२॥ द्रुत-
मवेहिसुताद्यकुहूनिशांसुखशयेबततेमनुवत्सरां ॥ पितरिचास्तगतेनरभास्करेयमथचंद्रमपीच्छसिनापिसः ॥ ७३ ॥ ॥ ४३ ॥

समस्यसर्वत्रममाग्रजन्मवरीयसःपूर्णकलस्यतस्य ॥ चंद्रस्यनामैवसुखायतेनविनात्रविज्ञेयतयाकिमुस्यात् ॥ ७४ ॥
तारापहारेणपुरोधसंवार्किंरोहिणीमेवतिरश्चकार ॥ कैंस्यापियद्दंडकमापितःस्यात्तेनेतिविश्रब्धतयावदाशु ॥७५॥ पृष्टा
बहूक्त्यानिजगादकृष्टात्वदृष्टातुविस्पष्टतयाभवद्यत् ॥ राज्ञोवरद्वंद्वमवापमृध्धंराज्यंतवारण्यगतिंतदीयां ॥ ७६ ॥ वरंन
जानेपरमंपुमांसंव्यवासयस्तन्नरकंहिगच्छ ॥ वधूंभगिन्याइवतज्जनन्याःपरंसुमित्रात्मजमप्यमंतुं ॥७७॥ वदावदं
व्यक्ततयासमुद्धतंरामस्यमाताभरतंसुमित्रया ॥ आहूयशीघ्रंनिजमंदिरांतरंनिनायशत्रुघ्नयुतंतपस्विनी॥ ७८॥ तुदसि
मातरमद्यकुतस्तयाह्युपकृतंत्वयिराज्यसमर्पणात्॥ किमियमीदृशाधिकृतिमापिताभरतमामिवपश्यनचाहितां ॥ ७९ ॥
निरागसंमांजननिप्रमीतंमात्राकृतेनापिचपाप्मनाद्य ॥ नमारयत्वंविपरीतभावोयायांगतिंदुर्गतलोकगम्यां ॥८०॥ श्रु
त्वावसिष्ठोभरतस्यतादृशंसत्यापितंभाषितमैहलौकिकं ॥ आश्वास्यतंगीर्भिरथास्यभूपतेर्नकारयामासनपारलौकिकं८१
तदनुसुमित्रातनयेनप्रतापेनचामित्रभावंगमितःपत्रिवरवाहनस्तत्रारिप्रमुखस्तुतस्तातेनविवासितोविपिनेनिवासितोवनं-

टीप १ सुवर्ण २ गां ३ दक्षस्य ४ दंडकवनं

॥ छ ॥ ॥ छ ॥ ॥ छ ॥

विधातुंजनानांप्रियोभ्राताछत्रीकर्तव्यइतिभरतेनसंभाषमाणःशत्रुघ्नःप्राग्द्वारिवस्त्रादिभिःपरिष्कृतामब्जमुखःकुब्जामवलो
क्यमहताक्रोधेनास्याबोधेनराजावरोधेनविरुद्धेनभूतमितितांन्युब्जांविधायासुरसेनामिवेतस्ततोधावमानांकेशादावाकृ
ष्यच्यवनादिनानिनदंतींव्यत्यस्तवस्त्राभरणांकैकेयीमभिनिरीक्षमाणांतिरस्कृतांभरतंशरणमागतांयत्कृतेहंतुमिच्छासि-
नास्मान्ससमर्हयेदन्यथामंथरांकैकेयीमपिपरलोकायप्रस्थितामेवजानीहीतितेननिवारितःसामंथरापिकैकेय्यानिभृतंस
माश्वस्ताबभूव ॥ ११ ॥ अस्मान्भरस्वभरतत्वमितःपरंतेतातोगतोदिवमितोनहिराजहीनं ॥ संपुष्यतिप्रकृतिमंडलमेव
मुक्तंश्रुत्वाधिकारिपुरुषैःसचतानुवाच ॥८२ ॥ ज्येष्ठःकुलेभवतियःसहिराज्यभाक्स्यादस्माद्भवद्भिरपिनैवहितंसमुक्तं ॥ ग
च्छामितंसपदिराज्यपदंहिभोक्तुमानेतुमेषविपिनंभवताद्यजोषं ॥८३ ॥ वृथाभोवचनेनयथाप्रथीयान्गमनेपंथाविधीय-
तांशिल्पिभिरितिकृताज्ञामहामात्रायात्राविधानंसर्वंसंपादयामासुः॥१२॥मंक्षुप्रमोदयुक्षुप्रकृतिषुसामाजिकेषुशृण्वत्सुमा
त्रेनसापित्राकनीयसासत्राभ्रात्राविहीनानस्मान्कस्त्रायेतेतिबहुविलपंतंभरतंवरार्जितमत्यूर्जितंराजविवर्जितंराज्यमुपभुं-



क्ष्वेतिबहुशोपिपुरोहितेनोक्तंरामंवनादानयितुंसमुद्यतंतंसर्वेपिदत्तसंमताबभूवुः ॥ १३ ॥ इतिश्रीमद्दांतकुलावतंसजगन्ना
थात्मजलक्ष्मणविरचिताभिनवरामायणचंपूकाव्येपंचमस्तबकः ॥५॥ छ ॥ श्रीगणेशायनमः ॥ आदायभांडंसक
लंससैन्यस्तिष्ठन्रथेराजपुरोहितेन ॥ गंगांगुहाधिष्ठितभूमिभागांजगामरामंविपिनेसमेतुं ॥ १ ॥ गुहोथसैन्यंभरतस्यदृ
ष्ट्वाशंकाकुलश्चेतसिनैजचारान् ॥ उवाचवाक्यंभरतोनुरामंहंतुंवनंगच्छतिपश्यतैनं ॥ २ ॥ विमृश्यदेयोतिथिदेयभागो-
नावापितार्योनचवात्रतार्यः ॥ अर्च्यौयदिस्यादितिदाशवर्योयौगृहीत्वाफलमूलजातं ॥ ३ ॥ गुहःसमेतुंभरतंफलानिमू
लान्युपादाययौसुचेताः ॥ भ्रातुःसखातिभरतेत्युवाचग्राह्योयमास्तेभरतंसुमंत्रः ॥ ४ ॥ समर्चितोसौभरतःससेनोमार्गे
भरद्वाजमुनिंसमेतुं ॥ संदर्शयस्वैरमनूपदेशंगांगंदुरध्वंगुहमित्युवाच ॥ ५॥ सतीमतिःस्याद्भवतीयतस्त्वंमातुःप्रहायापिम
तंस्वगत्या ॥ संत्यज्यराज्यंयदयत्नलब्धंगच्छस्यहोतंगहनेविचेतुं ॥ ६ ॥ गुहेनसर्वंकथितंतदस्मैशय्यादिकंभ्रातृकृतंतदा
नीं ॥ सुखायनासीत्परमश्रुपूरप्रवृत्तिदक्षंश्रवणेविधातुः ॥ ७ ॥ भावंस्वकीयंभरतस्यचास्त्रंसुनिर्मलंतत्कथयांबभूव ॥ श्रु

त्वापतत्तंप्रतिमातृवर्यांप्याश्वासयच्चारुतयातदानीं ॥ ८ ॥ अनर्हमार्यस्यसुखोचितस्याप्यभूदतिक्लेशविधात्मत्कृते ॥ श
य्यादिकंधिग्धिगितिब्रुवंतंदृष्ट्वाससर्वोपिजनस्तथाविधः ॥ ९ ॥ तीर्त्वाजलंतद्भरतःससैन्योगुहेननौभिस्त्वरयार्जिताभिः ॥
द्रष्टुंभरद्वाजमुनिंतदानींपुरोधसामंत्रिवरैर्जगाम ॥ १० ॥ दृष्ट्वावसिष्ठंपुरतःप्रतिष्ठंसमार्चयत्तंविधिनाप्रदिष्टं ॥ याज्येनयु-
क्तंविधिनायथानराज्येनयाज्योपिसुखीतथासौ ॥ ११ ॥ ततोभरद्वाजमृषिंप्रणम्यनिर्दिष्टमार्गःसचतेनत्द्दष्टः ॥ निर्दिश्य
मातृःप्रतिचित्रकूटंद्रष्टुंसरामंप्रययौजवेन ॥ १२ ॥ फुल्लानिपुष्पाणिपतंतिवृक्षादितस्ततोधावतएणसंघान् ॥ नानाविधा
न्पक्षिगणान्निरीक्ष्यसंस्थाप्यसैन्यंप्रययौसपद्भ्यां ॥१३॥ दृष्ट्वामनुष्यान्गहनेसशस्त्रान्द्रुतोद्गतानांहरिणीगणानां ॥ स्त
न्यंहिशत्रुघ्नपयःपिबंतःशावादृशोयद्भमयंतिपश्य ॥ १४ ॥ इच्छामितंकल्पतरुर्ददातिफलंकुटोमुष्यतटोद्भवोयः ॥ तथाविधः
सोपियतोहिसीतेततोनकिंनंदनमेतदेव ॥ १५ ॥ मंदाकिनींपश्यसखीमिवस्वांपद्माननाढ्यांहिचकोरनेत्रीं ॥ कोकस्त
नींसन्नतगात्रयष्टिंतुल्यांविगाहस्वसुखेनसीते ॥ १६ ॥ इतिब्रुवन्नंकगतांससीतांतस्याअलीकेतिलकंकरेण ॥ मानःशिलं

टीप १ ललाटे ॥ छ ॥ । छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

यत्तुचकाररामस्ततोधिकंसाशुशुभेवरांगी ॥१७ दृष्ट्वाकपीनांप्रवरंकरालंसीतापिरामंदृढमालिलिंग ॥ अभर्त्स्यत्तंप्रस-
भंसचापिकृत्वायतांवक्षसिसन्नतांगीं ॥ १८ ॥ जानाम्यपांगंमयिमानसंतेधृतंसमुत्साहवशेनतद्वत् ॥ मयापरंवक्षसि-
तावकीनेदृष्टंप्रियेयेतिप्रजहाससीता ॥ १९॥ भोजयंत्याःससीतायाःकाकंस्तनविदारिणं ॥ नचकारगतप्राणंकिंतुकाणमिषी
कया ॥ २० ॥ सीतायैदिशतिपलंविरोचमानंसीतेशेभरतपदातिपादजातः ॥ भूमिंद्यांयदभिबभूवधूलिसंघःसत्वौ
घःसपदिबभूवकांदिशीकः ।२१। सौमित्रेकिमिदमभूतपूर्वमुग्रयत्रेणूनांनिवहइतोपिपश्यसद्यः ॥ आखेटंचरतिहठेनभू
पतिर्वावृक्षाग्रेझटितिभवोन्नतेप्रदेशे ॥ २२ ॥ दृष्ट्वासोविटपिगतःपुरःप्रदेशेकैकेयीसुतमनुतस्यसैन्यजातं ॥ रामायंसमु
पगतोद्यहंतुमस्मान्हन्म्येनंभरतमथाशुराज्यलुब्धं ॥ २३ ॥ अश्लीलंवचनमिदंनवक्तुमिष्टंद्रष्टुंनःसतुभरतःसमागतःस्या
त् ॥ कैकेयीमपिवर्विनिंद्यवाक्प्रसारैर्दातुमेसकलमपीहराज्यमृत्थं ॥ इत्थंसुमित्रातनयोनिशम्यतद्रामस्यवाक्यंप्रतिल
ज्जितोभवत् ॥ जानेपितात्वांगहनेविलोकितुमभ्यागतःस्यात्तनयेनसत्वरं ॥ २५ ॥ इतिलक्ष्मणेनसाकंवदंतंपुंजीभूत-

टीप १ कटाक्षं १० तिलकं २ मनः १०मनःशिलारचितं ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

मिवसुकृतिनांपुण्यपरिपाकमैषीकशासितकाकंतेजसानाकस्यनायकं पाकशासनमिवभुवःपालकंस्वाग्रजंदशरथपाकंत-
दाश्रमंप्रविष्टःप्रेमाविष्टोभरतःसानुजःपर्णशालायामभिनिविष्टमालक्ष्यक्षणेनतच्चरणयोरुपांतभुविप्राणिपपात ॥ १ ॥ मूर्ध-
न्यवघ्रायनतेनमूर्ध्नादोर्भ्यांसपर्यष्वजतानुजातं ॥ अंकेनिविष्टंभरतंविधायपप्रच्छरामोजटिलंस्वतुल्यं ॥ २६ ॥ मन्वा
दयोदशरथावधियेनपृथ्वींमार्गेणनिश्चितमशासततेनसत्वं॥शास्ताभवन्नतितरांभरताद्यकस्माद्राज्यंविहायविपिनंद्रुतमा
गतोसि ॥ २७ ॥ कस्माज्जटाचीरधरोनुजातजातोसिराज्यंप्रविहायपित्र्यं ॥ यत्कारणंतद्वदपृच्छतेमेविहस्ततांयातिय-
तोमनोमे ॥२८। पित्रानियुक्तोयुवराजभोगेमात्राकृतस्त्वंवनवासयोगे ॥ गतःपितास्वर्गगतिंचगंत्रीमाताप्रभूतंनरकंम
दीया ॥ २९ ॥ अनुक्रमेणसंप्राप्तांविक्रमेणानुशाधिगां ॥ उपक्रमंत्वंवाचोमेनातिक्रामाद्यराघव ॥३०॥ निधनंसपितुः
श्रुत्वानिधानंपयसांगतः ॥ निवापमैंगुदंकृत्वावापतत्पुनराश्रमं ॥ ३१॥ गुरुणापुरस्कृतासुदशरथवनितासुमंदंमंदंमं-
दाकिनीमुपयातासुसुतसेवितंतीर्थमुपलभ्यतासुकौसल्ययासुमित्रेइदंतदयनंवरीयसेपयआहर्तुंकनीयसीपिचभूमंडलस्य



भर्तुःपुत्राभ्यांदत्तमैंगुदंपिंडंपश्येतिबहुविलपंत्याक्रमेणरामस्यपर्णकुटीमुपयातासुसर्वासांवसिष्ठस्यचगृहीतचरणः सल-
क्ष्मणोरामस्तदनुसीताशत्रुघ्नसहितोभरतस्ताश्चशोकांबुधिनिमग्नाःसर्वांशर्वरींपर्यावर्तयामासुः॥२॥तदनंतरंप्रभातायांश
र्वर्यांनरवर्येषुतेषुसर्वेषुकृतखर्वेतरनित्यकृत्येषुतूष्णींभूतेषुरामपादप्रेमरतोभरतःपूर्वरंगप्रसंगायमंदंमंदममंदार्थांवाचमु-
दीरयामास ।३ कृतापराधाजननीममेयमाराधितासांत्वमयैर्वचोभिः ।गृहाणराज्यंकुरुमामकीनंनिष्पंकमात्मानमितीवयां
च्या ॥ ३२ ॥ सपंकतायामपपंकतायामनीश्वरःप्राणभृदीश्वरेच्छया ॥ यथाभवेच्चेष्टितएषतद्वन्नचात्रशोकंकुरुतेविवक्षि
तः ॥ ३३ ॥ गतःपितास्वर्गतिमीश्वरेच्छयाराज्यंत्वयाप्तंतदपिप्रविस्तृतं ॥ भुंक्ष्वप्रवीरोस्यपिराजवंशजःकिंशोकभारेण
कृतेनसेत्स्यति ॥ ३४ ॥ एतादृशंवाक्प्रसरंप्रवक्तुंदक्षोनजीवोभवतीहकश्चित् ॥ अतःस्वधर्मापतितंहिराज्यंत्वमेवचोरी-
कुरुराघवाढ्यं ॥ ३५ ॥ ईहांपितुःपूरयसत्सुतत्वाद्वयोगतिश्चारुमतेतदीया ॥ सत्वंपुरंगच्छगृहाणराज्यमहंप्रवेक्ष्येखलु
दंडकायां ॥ ३६ ॥ वीरेणपुंसाहितमीक्षणीयंकःकस्यबंधुर्जनकोपिकोवा ॥ पित्र्यंसमागच्छहिराज्यमेवमुवाचजाबालि

रपीहरामं ॥ ३७ ॥ कुर्वंतिसन्मार्गगतंनरंयेतेचेत्प्रकुर्युर्विपरीतकृत्यं॥ समस्तमस्तंगतमेवचस्यादित्येवबुध्द्यौकृतिभिर्विधे
यं ॥३८॥ प्रसंगतःप्राप्तमिदंमयेरितंननास्तिकत्वान्नचलाभलोभतः ॥ गृहाणवामुंचमदीयभाषितंनप्रेमभंगंप्रविधातुमा
गमं ॥ ३९ ॥ नत्वांप्रबोद्धुंविपरीतबुध्यास्वयापिजाबालिरुवाचधीरः ॥ भौकव्यमत्धारघुवीरराज्यमवोचदित्थंत-
मरुंधतीशः ॥ ४० ॥ ज्ञातंमयासर्वमिदंनमिथ्यातातस्यवाक्यंगुरुवर्यपूज्य ॥ क्षंतव्यमेतद्भवतापिसर्वंवत्स्यामिशून्येग
हनेससंधः ॥ ४१ ॥ पुरोहितेनोक्तमथावधीरितंज्ञात्वातदासौभरतःसुमंत्रं ॥ त्यक्षेतनुंयाहिपुरंजवेनदुर्वृत्तयुक्तांनबिभ-
र्मिसूत ॥४२ ॥ संतप्तमेनंसमवेक्ष्यरामःशनैःशनैस्तंभरतंनिनाय ॥ शांतिंप्रदायापिचपादुकेस्वेतदारघूणांप्रवरःकृपामृदुः
॥४३॥ यावच्चतुर्दशसमागहनेभवेयुर्वासस्यतासुभवतोयतिवेषधारी ॥ भूयामहंनचपुरंनियतंप्रवेक्ष्येनोचेद्भवेद्दृशिभवा-
ननलंप्रवेक्ष्ये ॥४४ ॥ तदनुगृहीतार्यसंदेशःशिरसिपादुकेविदधानआचार्यादीन्यथायथंरथमारोहयन्स्वयंरथमारुह्यायो
ध्यायांसर्वामातॄःसन्निवेश्यांतः पुरेतेपादुकेराज्यव्यंजनानिचगृहीत्वायावद्रामागमस्तावन्नंदिग्रामोवसतयइतिप्रतिसंधा



यताभ्यांप्रातिदिनंसर्वंनिवेद्ययथायथंविनियुक्तवान् ॥४॥ एकचक्षुषमसावपिरामःकाकमाकलयतिस्मसमंतात् ॥ भ्रांत
मुत्धततयाकृतपापंस्त्रीकृतेकथमितोभवितानः ॥४५॥ राक्षसाःप्रतिदिनंतुनिकारंकुर्वतेभृशमितोगमनंनः ॥ स्याद्यदी-
हकुशलंभवितेतिप्रस्फुटंमुनिगणाःसमवोचन् ॥४६॥ तत्रतंकुलपतिंरघुराजोवृत्धमाहभवतांमनईषत् ॥ लक्ष्यतेकुतइ
तश्चलनेतत्कारणंवदयतोभयमास्ते ॥४७॥ यद्दिनेगिरिमिमंसमवात्सीस्तद्दिनात्प्रभृतिराक्षसधुर्यः॥एत्यनःप्रतिकलंस्वग
णेनयत्प्रपीडयतितत्किमुवाच्यं ॥४८॥ एवमार्षवचनंसनिशम्यप्रस्थितंसपदितापसवृत्धं ॥ राघवोभयमपास्यथनोवाजोष
मित्यभिजगामनचोक्त्वा ॥ ४९ ॥ राघवोपिबहुकारणयोगात्तंगिरिंसमपहायगतोत्रिं ॥ सोपितंप्रियतयाभिपुपूजप्राप्तमं
तिकमथानुजयुक्तं ॥ ५० ॥ जानकींवनितयाप्यनुगृह्यस्वीययातदनुतस्यपुरस्तात् ॥ अब्रवीत्सपदितन्महिमानंराघवा
यसतुतापसधुर्यः॥ ५१ ॥राजपुत्रिमुनिभाषितमेतच्छ्रौतमार्गगतमाशुविधाय ॥ तापसीमुपनिपीडयतदंघ्र्योःशाश्वतंकुश
लमाप्नुहिसीते ॥ ५२ ॥ तदनुतांजरसातपसायुतांमुनिवधूंशिरसाप्रणनामसा ॥ अपिपतिव्रतयापितयामुहुःप्रतिसतीव्र

तमप्यनुभाषिता ॥५३॥ अंगरागमर्पितद्वरमाल्यंवस्त्रमाभरणजातमवाप्य ॥प्रस्थिताविदिततन्महिमासातांस्वजन्मच
रितंसमवोचत् ॥ ५४ ॥ मधुरयासिगिराप्रियतापदंतवविदेहजनेरविरस्तगः ॥ समभवद्रजनीपतिपार्श्वगाभवशुभंभवि
तेत्यवदच्चतां ॥ ५५ ॥ तथाविधांतामवलोक्यरामोवस्त्रादिभिर्भूषितगात्रयष्टिं ॥तयासरेमेरघुवंशधुर्योवितानुसूयाकृतदा
नवृत्तः ॥ ५६ ॥ ततःप्रभातेमुनिभाषितेनाविज्ञातरक्षोगणमंतुजातः ॥ तैःसत्कृतोरण्यमुपात्तशस्त्रोविवेशसीतानुजनुःसमे
तः ॥ ५७ ॥ इतिश्रीमदभिनवरामायणचंपूकाव्येषष्ठस्तबकः ॥ ६ ॥ तदनुचंडभानूदयवेलायांरणशौंडःकोदंडकांडपरि
मंडितकरदंडःस्वानुजोपगूढपुरः पृष्ठभागयानवोढयासंचरंत्यासंचरन्रघुपरिवृढइतःकोडखंडानीतोगंडशैलप्रतिमान्वन
शुंडालानित :पुंडरीकमंडलानीतोगंडकवृंदानीतोविस्फारितकंठकांडान्कुंडलिनोध्वनिद्दगध्वनीनान्विदधत्सिंजिनीध्वनि
नाविधुन्वन्नखंडमृगकांडशरण्यंदंडकारण्यमनुप्रविशंश्चमूरुचर्मपरिवर्मितशमीगर्भतरुवरप्रकांडारणीभिः स्रुग्भांडैःकुंडी
भिःसमिद्दंडैराग्निकुंडैःपरिपिंडितआश्रममंडलेत्राभातिकानिकृत्यानिविदधतोवल्कानिपरिदधतःपरब्रह्मानुसंदधतःपंका

टीप १ विचारित ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

मूलक्षयकांक्षिण :पारिकांक्षिणोवीक्षमाणःसज्जज्यंधनुर्विज्यंसंजनयन्विनयवरीयसाशिरसाप्रणतिशतान्यारचयामास॥
१॥संपन्नाज्ञानविज्ञानैरापन्नत्राणदीक्षितं ॥ आसन्नागतमाज्ञायप्रसन्नामुनयोभवन् ॥ १ ॥ नेपथ्यंसौकुमार्यंतदपिचसु
षमांरूपसन्नाहमर्घ्यंदृष्ट्वावाचंयमास्तेविनयगुरुतयानंदमग्नास्तदानीं ॥ भूत्वाकृत्वानमस्यांप्रणयनरभसानामयंतांस्त-
दीयंपृष्ट्वाकाष्ठैर्विशालांदृढतररचितांपर्णशालामनैषुः ॥ २ ॥ पाणावजिह्मगशतैःकुरुतंस्वधर्मंत्वंचंद्रहासमिवधत्स्वयशः
समग्रं ॥ पृष्ठेकुरुष्वफलकेनयुतंनिषंगंविद्रावणंपुरुषमाशुजहीहिराम ॥ ३ ॥ योवाभवेन्मघवतस्तुतुरीयभागीराजाभ
वेज्जगदधीशतयाप्रसिद्धः ॥ वृत्धश्रवाभवसिराघवतेनसत्वंपूर्णोसिराजजनितस्त्वयिसर्वमैश्यं ॥ ४ ॥ अश्विनाविवच
तौसहोदरौतंविराधमपिशूलिनंतदा ॥ वीक्ष्यशूलरहितंविधायसंप्राप्तदिव्यवपुषंप्रचक्रतुः ॥५॥ अध्यर्धयोजनगतेपथि
रामचंद्रप्राप्योस्तिनिर्मलतरःशरभंगएनं ॥ गत्वानिषेव्यभवशांतमनामनास्विन्गच्छामितेविभवतःस्वगतिंप्रसीद ॥६॥

टीप १ सज्जनप०बाण २ आचारंप०धनुः ३ खड्गंप० नीत्वा ४ हेतुकवेशचर्मणा ५ तूणंप० निश्चिंत्य छंग ६ वित्विद्धःप० अपकर्त्तारं ७ इंद्रःप० ख्यातकीर्तिः८ राजजन्मना ९
रोगिण्यंप० आयुधवंतं १० कृषिःप० नलाद्यप: ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

अंगहीनोपियत्संगान्नअंगैःसंगतोभवेत् ॥ निर्व्यंगपित्रसंगेनशरभंगमवापसः ॥ ७ ॥ पुरुभिर्हूयतेयस्मात्पुरुहूतस्ततः स्मृतः ॥ सहूतोशरभंगस्यदूतोधात्रानियोगतः ॥ ८ ॥ गृहंमयामंथरयोपजापाद्विभेदमापादितमस्तियस्य ॥ अहंपुरस्तस्यकथंभवेयामितीवरामंनददर्शशक्रः ॥ ९ ॥ पश्याधुनालक्ष्मणसर्वदिक्षुविसारिणःकांततयाक्षिमोषान् ॥ एतान्सगंधानपिभूम्यगंधान्व्यकीकरोत्यंबरमेवतावत् ॥ १० ॥ रामेप्राप्तेस्वकीयाश्रममथसऋषिर्गौतमश्चित्रभानुंसंबोध्याम्नायमंत्रैस्तदनुकृतवराज्याहुतीनांपुरस्तात् ॥ तस्मिन्निध्धेशरीरंस्वयमधृततोग्नेःकुमारोपिजातोब्रह्मादीनामतीष्टोभवतिहिसततंयोग्निजोवल्लभःसः ॥ ११ ॥ त्वदागमनहर्षेणवयंस्यामसकंटकाः ॥ सकंटकाह्यरण्यानीयथानस्यात्तथाकुरु ॥ १२ ॥ वाचंयमामेशृणुताद्यभाषितंभवामिपुण्योपपदस्यसांप्रतं ॥ जनेस्यवृध्येपरितोपिदंडकांचरामितैर्भाव्यमितोपिविज्वरैः ॥ १३ ॥ यातुनःसर्वदाभीतिःपातुनोराघवोभवान् ॥ सातुगच्छतुनिःशंकंयातुतेत्त्हृदयेघृणा ॥ १४ ॥ पुपूजभक्त्यावनितानुजाभ्यांरामंनिवेद्याशुसकर्मजातं ॥ इयायरामःकुतएकरात्रात्कोवापसर्पेन्ननरःसुतीक्ष्णात् ॥ १५ ॥ सुतीक्ष्णस्याश्रमेवासोह्यभी



१ गंधवद्वस्त्रं २ रोमहर्षः ३ कंकट ४ पुण्यावजनस्य ५ राक्षसस्य ६ छेदनापप- समृध्ये ७ विगत ज्वरैः ८. विशिष्ट ज्वरैः

क्ष्णंनैवरोचते ॥ श्लक्ष्णरुस्यतपसात्वत्यारक्षणस्यचतपस्विनां ॥ १६ ॥ ततोविभातायांविभावर्यांसीतासौमित्रिसहितोदशरथपुत्रःशीततोयत्रिहिताङ्कवस्तनूनपातंदैवतानिचाभ्यचर्योध्यंतांविवस्वंतंनयनयोरयनेऽनेयत्वेनध्यानपथंनिनीययोगबलसुलभसकलभुवनवीक्षणंतत्क्षणेनसुतीक्ष्णंपारिकांक्षिणंत्वत्पर्णशालायांत्वद्गृहीतार्हणाःसुखोषिताइतिश्लक्ष्णतरयावाण्याप्रशस्यस्वस्वोदवसितंनेतुंविनययुतामुनिततयस्त्वरयंतिनःप्राज्ञतमस्त्वंदेह्यनुज्ञामित्युक्त्वागाढंगृहीतचरणोरिष्टंस्वेष्टंपंथानंयावन्नविस्पष्टसृष्टघृष्टिस्तावद्गच्छाच्छाच्छनीनिलोचनासेचनकानिप्राज्यानिमूलफलानिजलजानिचपश्यन्जक्षत्निघ्नन्नइत्युक्तस्तंप्रदक्षिणीकृत्यधृततूणधनुर्बाणकृपाणःक्रमेणविक्रमेणरक्षोगणानिकारणप्रक्रमणार्थंनिखिलशरण्योरघुवरेण्योदंडकारण्यंस्वचरणसंचरणेनकल्याणितामानेतुमुपक्रांतवान् ॥ २ ॥ तदनुसुतीक्ष्णेनाभ्यनुज्ञातंप्रसृतांसृतिमनुसरंतंरघुनायकसुतंजनकसुतासरसयाऽकृतप्रभूताक्षरव्ययायाहृदयमाप्यायंत्यावाचामृषावाचःपरकामिनीगतार्थैनैवविरोधनंरौद्रतातत्रप्रथमयाविहीनोद्वितीययासहितोपिद्वितीययाविहीनःप्रकृत्यापितृतीययाह्वेअनुगतयाभावितव्यंदुष्टसंगति

निग्रहीतारमपिस्थानाह्वयावयतीतिसंक्रंदनविश्राणितकौक्षेयकपारिकांक्षिकांक्षितदृष्टांतंददतीवनितानितांतचिकुरतया-
लपितमितिकातंस्वांतंमधुरयंतीसुबध्यमबध्यंवायुत्थबत्थश्रद्धेनापिसुशब्दमपशब्दंविचिन्वतासुमित्रातनयेननिध्याययद
भिरोचतेतेचेतसेतत्कुरु ॥ ३ ॥ अभयंददौरघुवरोमुनितत्यैपुरतोघृणित्वमवलंब्यनितांतं ॥ विनिवृत्तवानितिहिराक्षसना
शादयशःकथमनुविषहेयनतध्रूः ॥ १७ ॥ यदभाषथास्त्वमधुनाविबुधानांगुरुणाप्यशक्यमिववाक्यमपीह ॥ तदसांप्रतंव-
नितयोकमितीदंमनसःपरंतुावेकरोतितवोक्तं ॥ १८ ॥ सुधारसस्यंदितदीयभाषितंविधायचित्तेरघुनायकोभृशं ॥ संधां
रिरक्षुर्मिथिलेशसंततेर्व्यधान्मनस्कारमतीवदक्षिणः ॥ १९ ॥ तदनुसीतासहितौतौरघुपतीतत्रतत्रपवित्रतमान्प्रसृतच-
रित्रान्सालपत्रच्छायच्छत्रिणोबहुविधपतत्रिमतःस्वरसुप्रवाहोल्लासितक्षेत्रान्प्रतिष्ठापितचैत्रान्दृगतीतपात्रान्पोत्रिपोत्रो
त्खाततटप्रांतान्छ्रूयमाणमधुरमंत्रान्यात्रिकजनविधीयमानयात्रान्यावकविरचितदर्शनीयास्थान्शैलप्रस्थान्मुनि-
निवहाक्रियमाणसवनानिसुरभिगंधिमंदशिशिरपवनानिप्रांतमहीरुहशालाप्ररोहप्रतिबिंबायमानमुनिभवनानिअचिरप



रिवर्धिततरुवरपलाशविसरानूपप्रदेशप्ररूढयवसश्यामायमानानिविश्वासेचनकतयापुनःपुनःसंजातदृक्छंदवनानिगुहा
गहनस्थानानीवसुखदानिगुहागहनस्थानानिसवनितान्यपिअवनितानितानिवनानिसव्यासव्यपदव्यानेदीयांसिआ-
पिपासुजनसाधीयांसिअच्छभ्रमरमणीयपद्मवरीयांसिसुषमातोलनदवीयांसिसन्मानसानिर्मलतरवारिभरभरितानिसार
ससंरावसंमोदितपथिकचेतांसिसरांसिसागरगाआपगाश्चविहितरौहिषमोषान्यौवनमदभरपीवरदूरपरिदृश्यमानमु
ष्ककोशान्रौहिषान्महिषांश्चाग्रेकृतविषाणपरिणाहान्वराहान्सरभसप्रलूनसारसव्रजान्गजांश्चपश्यंतावस्तोन्मुखेभगव-
तिसहस्रमयूखेअतलिनगोधूलिमलिनसारसहंसयुतेद्विगव्यूत्यायतप्रांतवेशंतेतिरोहितकर्तारंतौर्यत्रिकविरावमशृणुतां॥
४॥ ननर्तकीनापिसभानवाद्यंसंश्रूयतेकेवलनाट्यनिस्वनः ॥ विनानिदानंकथमार्यकार्यंचित्रीयतेद्वित्रिपदेषुचेतसा ।२०
धर्मभृन्मुनिवरोरघुनाथप्रेमपृष्टइदमाहनिदानं ॥ गूढमत्रकथयामिसमस्तंसादरंशृणुतहर्षनिदानं ॥२१॥ सरोवरेस्मि-
न्किलमांडकर्णिःपरोरजोधामनिसन्निविष्टः ॥ शरत्सहस्राणिदशापितेनतप्तंतपश्च्यावयतिस्मगोत्रभित् ॥ २२ ॥ तदनु

महताक्रंदेनसंक्रंदनादयस्तत्तपसः स्वात्मत्राणायमांडकर्णिमुनिप्राणप्रीणनकारणायअसमशरशरसंख्याअप्सरसः सं-
ख्येयप्राधान्यमापद्यमानाःसंधानायताभवतीर्यथानातिवर्तेततथाविधीयतामितिस्वकार्यनिर्वाहायसमयूयुजन् ॥ ५ ॥
पत्नीत्वमालंब्यततस्तदीयंतंमांडकर्णिंरमयंतिनित्यं ॥ तस्मिञ्जितंकंठरवस्तदीयोवाद्यध्वनिश्चाध्वनिसन्निशम्यते ॥२३॥
शृण्वन्धर्मभृतोवचोरघुवरश्चित्रीयमाणोत्वदिदिप्राविक्षत्सहलक्ष्मणेनचपरंवध्वामुनीनांक्रमात् ॥ शांतान्याश्रममंडलानिनि
तरांतत्रोपचारान्कृतांस्तैस्तैस्तैस्तानपितान्प्रगृह्यशरदांपंक्तिंवनेनीतवान् ॥ २४ ॥ निःशेषपीतादिमभूतसृष्टेराभिख्ययाभी
क्ष्णमगस्त्यकृष्टेः ॥ रामस्यचित्तेपिबभूवदृष्टेःसमुद्गमोमंगलशौंडदृष्टेः ॥ २५ ॥ दृष्टामयायेऋषयःसुतीक्ष्णतेरास्तिपस्त्यंवि
पिनेह्यभाषि ॥ अस्मिन्नगस्त्यस्यबहुप्रशस्तंशस्तप्रदंतत्किमितोविदूरे ॥ २६ ॥ संमंत्रितंयद्रघुवीरतत्त्वयात्वदामदीयेन
विविक्तरोचिषा ॥ त्वदीयमुख्यस्थितियोजनंगतंजानीह्यगस्त्यंतवतत्तुसांप्रतं॥२७॥ इत्यतीक्ष्णंसुतीक्ष्णेनपारिकांक्षिणा
वर्णितमभीक्ष्णमंतःकरणेनधारयमाणःसलक्ष्मणोरालपक्ष्मणाशशलक्ष्मणासदृक्षमुख्याचसुख्यन्नृपथिकाथितमथितवाता



पिपापिकथःप्रथितप्रथंप्रभाववरीयांसंवयसाकनीयांसमगस्त्यसहोदरमुरीकृतोदजोदरमस्तमयसमयक्रमेणसमस्ताकुं
चयमानकरंसहस्रकरंसमयासमयागतांपित्रप्रसुवमुपास्यतंदृष्ट्वापृष्ट्वाचकुशलंतदावसथ्यपथ्यमातिथ्यंगृहीत्वातत्रसत्रिगृ
हेआपतत्रिकलकलंतांरात्रिमतिवाहयामास ॥ ६ ॥ अस्तंभयद्योगमगस्त्यइत्ययंःसंभाव्यतेसर्वजनैःसमंजसं ॥ चित्रंतुते
दृर्थकएषनोच्यतेस्वतंत्रतालोकततेःकिमन्यथा ॥ २८ ॥ विंध्यशैलोमहाप्रस्थोमातुंयत्प्रायमाश्रितः ॥ दृश्यतेतदवस्थोयं
तस्यवक्तुंकिमास्थया ॥ २९ ॥ महाप्रभावोयमृषिःप्रतीतःकिंवर्ण्यतेलक्ष्मणयाहितूर्णं ॥ पूर्णोमहिम्नाप्रथिताद्यवर्णोमां
वर्णयाभ्यर्णगतंतदंघ्रेः ॥३०॥ तदनुतत्क्षणमंतर्वाणिवरेण्यपरिचरणकरणविचक्षणोरामचंद्रप्रणिहितोलक्ष्मणोनिभृत-
चरणःसच्छरण्यमुन्यग्रगण्यशरणस्यचूर्णीकृतजीर्णपाषाणवर्णकाचीर्णस्वस्तिकगोपद्मादिरचनाघनेशिष्यगणविधीयमा
नाध्ययनेप्रविस्तीर्णप्रघाणेरूपेणाशिष्यगणागणनीयंविधेयंकंचनसमाहूयपृथिव्यामेकरथोविघटितसर्वपर्थानकापथोघंटा-
पथीकृतसत्पथःशोभनगुणमात्रपात्रोजितामित्रोविश्वामित्रसच्छात्रोदशरथस्यप्रथमजःपुत्रःसत्रिणंवातापिसरीसृपपत्रिरा

टीप १ विंध्यं २ वृक्ष ॥ छ ॥

जंतत्रभगवंतंमैत्रावरुणिमवलोक्यदुर्दांतशिक्षणसंपादितांहःसंहरणेनस्वस्वरूपमुपनेतुमात्मानंपितृशासनतोदंडकारण्य
मनुप्रविष्टस्तत्तनयेषुतृतीयः सर्वथावरीयसोनुहारीवनविहारपारीणोदुस्तरापदर्णवपारावारीणपदपंकजस्त्वमसिइतिप्रती
हारतलेअद्वितीयसद्वितीयौवयसाषट्विंशच्छरद्देशीयावावेशिकौवैदेशिकौत्वच्चरणसदेशागतावितित्रिजगद्दैशिकायनिवे-
द्यतामितिसंदिश्यतद्देशदिश्यंपश्यन्निदेशावधिंपरिपालयन्क्षणमतिष्ठत् ॥ ६ ॥ शिष्योविशिष्यापिचतस्यवाचोभाष्यंवि
धायाथनिवेद्यतस्मै ॥ तच्छिष्टिशिष्टस्त्वरितंजगादपरीष्टिकारीकतमोत्रराम: ॥ ३१ ॥ नीवारानपिपनसान्मधूकसंघान्स्व
च्छायप्रसरणदत्तपांथसौख्यान् ॥ पश्याढ्यान्फलकुसुमैःपिकोच्चरावैर्व्याकोचानकृततथाप्यगस्त्यएषः ॥ ३२ ॥ इति
शिष्यवचोनगावुभावप्पृषिमिध्धंतपसापुरोगमौ ॥ दमुनःशरणादुपागतंचरणेनेमतुरंजसायने ॥ ३३ ॥ भूयादपचितिःसा
त्याअभियःसुत्व्हदांचवां ॥ नित्यंसाऽसुत्व्हदांतस्यालोकस्थितिमुषामितः॥ ३४ ॥ आरात्ससंधेर्नरेणभाव्यंगुरोःप्रभावो
द्गतदुष्टसत्वात् ॥ स्थितिर्भवेत्तस्यतथाजगत्यायशोविपक्षैस्यतथापिभूयात् ॥ ३५॥ ईशार्हणामानसशोधनानांपरस्परं

टीप १ अन्वेषणा २ अर्चाप. क्षयः ३ दूरेप. समीपे ४ सप्रतिबिंनप. समर्यादेन ५ विशिष्टप.. विगत ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

चार्पितगोधनानां ॥ स्थानानिरम्याणितपोधनानांदृष्टान्यृतेपंचवटीप्रदेशं ॥ ३६ ॥ तपः सिंधुदयासिंध्वोर्दीनबं-
ध्वोः समागमः ॥ स्वतः पुण्यजनौघानांवर्धकः कस्यनोमुदे ॥ ३७ ॥ मित्राणामप्यमित्राणामभियोपिभियस्तथा ॥
सातौभवत्वपचितिः सदैवतवराघव ॥ ३८ ॥ ज्ञातंदिव्यदृशामयासकलमप्यध्धाभविष्यंप्रभोसंभाषांविवृणोमिचेत-
सितवाश्लिष्टांशिरःकंपयन् ॥ अच्छाच्छामभिगच्छपंचवटिकांपालाशवृध्यैधियानांतेवासितयाममापिभवतःकिंचित्पराही
यते ॥३९॥ सर्वंजगत्स्वाश्रमसन्निकाशंशांतंविधातुंनहितेस्तिशक्तिः ॥ माद्दक्षिशक्तिंविवरीतुमिष्टेरापृच्छ्यगच्छेयमितोन
मस्ते ॥ ४० ॥ स्थानेकृतज्ञैर्विनियुज्यमानावस्तुस्थितिश्चारुफलायकल्पते ॥ ब्रह्मेंद्रदत्तान्छरचापखड्गान्गृण्हीष्वरामा
द्यमयोपदीकृतान् ॥ ४१ ॥ अक्षय्यमार्गणनिदर्शितमूर्तिरेषछन्नोभवन्नपिचकार्यकरोनिषंगः ॥ तत्वंगृहाणमहदावपनंप्र
सिद्दंतुल्यंत्वयारघुवराद्यमयाप्रदिष्टं ॥ ४२ ॥ गच्छन्पंचवटींवनेनवनमप्युल्लंघ्यमार्गेस्थितंगृध्रंनामजटायुषंरघुवरःपक्षीं
द्रवंश्यंभृशं ॥ रक्षश्श्वेतसिनिश्चिकायतमथोदृष्ट्वाभवान्कोसिचेत्युक्तातिनसगोत्रवृत्तकथकेनावापगोदावरीं ॥ ४३ ॥ पितृ

टीप १ छेताप. समृध्दिकृत् २ पूजाप. क्षयः ३ रक्षः समूहप. पलाशवृक्ष ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

सखत्वममुष्यमुखात्त्रियासहनिशम्यनिजेनकनीयसा ॥ रघुवरःसहतेनजटायुषापरिजगामसपंचवटींद्रुतं ॥ ४४ ॥ अगस्त्यनिर्दिष्टमिदंस्थलंमहत्पस्त्यंविधातुंक्षममस्तिवानवा ॥ स्वस्त्यस्तुतेलक्ष्मणकार्यकारिणेव्यस्तीकृताराातिकुलायधीमते ॥४५॥शरच्छतंयद्यपितेवनेस्थितिःपरःशताःसंत्वपितेमनोरथाः ॥ करोनमेनाथवतोह्यपावृतोवरोपिचेतोभवतात्तुतावकः ॥ ४६ ॥ यद्यस्त्ययंलक्ष्मणतावकीनोनिबंधएषोस्त्वपिमामकीनः ॥ शालांविधातुंपरमांविशालांस्थलीयमास्ते-निविडोच्चसाला ॥ ४७ ॥ सलक्ष्मणस्तत्रविधायशालांरम्यांस्वहस्तेनततोधिगत्य ॥ गोदामुदारांचनलिन्युपेतांस्नात्वाचकाराशुतदीयशांतिं ॥ ४८ ॥ वरीयसेपुष्पवलिंचवास्तुशांतिंसपद्येवविधायलक्ष्मणः ॥ निदर्शयामासततःसमोदस्त-स्माअदात्साधुतयांगघट्टनं ॥ ४९ ॥ तथाविधांलक्ष्मणहस्तनिर्मितांप्रविश्यरेमेरमयेवकेशवः ॥ विदेहपुत्र्यान्वहवृध्धसुस्थिरप्रेम्णाशरत्कालमथोनिनायसः ॥५०॥ भ्रातुर्वरिष्ठस्यपुरःप्रसर्पतःसुलक्ष्मणस्तस्यतुपृष्ठतश्चरन् ॥ सलक्ष्मणस्तंप्रतिरामभद्रकंजगाददिष्टंपरिपश्यतामिदं॥ ५१ ॥ यदातपस्यप्रतिबंधकारिन्यस्तंत्वयामात्कृतेसुखाय ॥ जनःसम-

टीप १ पर्णकुटी

॥ छ ॥ ॥ छ ॥

स्तोपितथाविधोस्मिन्यच्छत्रिणश्छंदतएवसर्वं ॥५२ ॥ संवत्सरोपिनकरोतिसुखंसमर्ग्रहेमंतकालमनवाप्यसएषकाः ॥ यस्मिन्जलंप्रभजतेनजनस्तुषारंकःशीतलंजडमहोनतिरस्करोति ॥ ५३ ॥ नीहारावृतरोदस्त्वान्नीशारमभिकांक्षति ॥ आहारंचविहारंचनमुंचत्येतदद्भुतं ॥५४॥ सर्वेष्वृतुष्वप्ययमेवकालोजनंस्वकर्मण्यभियोक्तुमीशः ॥ कथंनवाच्यंरघुराजपुत्रयदाहिताग्निःसकलोपिलोकः ॥ ५५ ॥ करीकलयतेकरंवलयितंभृशंदाक्षिणंकबंधमतिनिर्मलंपिबातिसंपिपासाकुलः ॥ ग्रहीतुमतिशीततःपुनरपिस्वभावस्छितंतदात्वइतिहैमनींरुचिरतांभवान्पश्यतु ॥५६॥ हिमसंततिशीर्णपर्णसंघाःकमलिन्योरसभाववर्जिताः॥ अभवन्बतनारविच्युतार्थाःखगनादैरहिताजलोद्भवाः ॥५७॥ यन्मध्यमांबाकृतदुश्चरित्रंनलक्ष्मणस्मारयमांविधेयं ॥ यद्भ्रातृहार्दंगतचेतसोमेविकारकृत्तेभवतीहवाक्यं ॥५८॥ वैमात्रेयोपिभरतोभ्राताभ्रातरमन्वियात् ॥ इतिशास्त्रेणानिर्दिष्टंमार्गमापेदमद्भुतं ॥ ५९ ॥ अत्यंतसौख्येनविवृत्थिमाप्तःप्रत्यूषकालेभरतःप्रजानां ॥ स्नातुंतटंसारवमुध्धिमाढ्यंहेमतएतीतिविचित्रमेतत् ॥६०॥ कृताभिषेकोत्तरवीरवेषमभ्रेषनिष्पेषितयातुपक्षं ॥ सुयो

१ नीशारःस्यात्प्रावरणेहिमानिलनिवारणेइत्यमरः

॥ छ ॥ ॥ छ ॥

पितंरूपितरवड्गकोषंददर्शतंसानुजमाशरस्त्री ॥६१॥ इंदीवरश्यामलदेहकांतिंतद्बाणतुल्याकृतिमंतरंगे ॥ तदार्तरूपाप्रवि
भाव्यरामंप्रतीपरूपेतिजगादकोसि ॥६२॥ आसीत्पंकिरथस्त्रिलोकविजयीराजाहमग्रेजनिः पुत्रोरामइतिप्रतीतिविषयस्त
स्यास्मिमेलक्ष्मणः ॥ भ्रातास्तेवरजोयमुत्तमगुणःशक्त्याचलोकोत्तरःपत्नीमैथिलकन्यकातवपुरःकासित्वमेषागता। ६३।
पुलस्त्यवंशोद्भवरावणाभिधंरक्षस्तवश्रोत्रपथंगतंयदि ॥ तस्यानुजाशूर्पणखेतिनामतःप्रख्यातवीर्यास्मिततोधिकापिच ॥
६४॥ राज्ञोसिपुत्रः कथमागमस्तेवनेकरालेस्त्रपलोकसंवृते ॥ भार्यानुजाभ्यांमृदुसुंदराभ्यांतारुण्यभोगक्षमतैषमस्त्वयि ॥
पितुर्नियोगेनवनास्थितेनसर्वस्यभूयादवनंस्वभावात् ॥ जातूत्थितिस्तेमनसोभयस्ययातूत्थितेर्यातुसमंभवत्या ॥ ६६ ॥
शातोदरीबिंबफलोपमोष्ठीचकोरनेत्रीसुदतीसुकेशी ॥ सत्कंबुकंठीकरभोपमोरूर्यातूपभोग्याभवतीतिजाने ॥६७॥ मु-
खंतवास्तेविकचारविंदंनेत्रेचपादावपिवातथेडयौ ॥ करौस्तनौपद्मयुताश्रुतिस्तेजानातिलोकोप्यसिपद्मिनीति ॥ ६८ ॥
कटंतेश्रोणिफलकंनखंप्रस्फोटनंविदुः ॥ नाभीमुलूखलंतस्मात्त्वत्तःसंसरतःसुखं ॥६९ ॥ सदेहेजांमामपहायरामविदेह

टीप १ वर्तमानंवत्सरे २ सदार्द्रहायस्यतस्माज्जातं ॥ छ ॥ ॥ छ ॥



जांत्वंकिमुरीकरोषि ॥ तद्राजधानीनहशाव्यलोकियद्यातुधानीमपिधिक्करोषि ॥७०॥ प्रधार्यमस्याःसपदित्वयाद्यतद्वी
रशब्दग्रहणंविनासा ॥ गच्छेदितश्चेद्भवितातवापिविख्यातिरग्र्यायदियंतथेति ॥७१॥ संस्थापयिष्यामिनतेकेलत्रंनवानु
जंसाधुतयाबिभीहि ॥ गृण्हासिचेत्सादरमस्मदीयंकलत्रमध्याकिमापिप्रदर्श्य ॥ ७२ ॥ जाययातवमयापिभूयतेमाय
याकिमनयाकरिष्यसि ॥ कामयाभवतितुल्यतांगताश्यामयाहियदितांप्रदर्शय ॥७३॥ वदसियद्वरवर्णिनितत्तथाकमपि
यंत्वमिहेच्छसिमाननं ॥ नमनसानुभवेयमतःशुभंसमधवाभिरनाप्यमितिस्थितेः ७४॥ ममानुजोरूप्यस्त्यधुनासुरूपःस्व
शक्तितोदातुमनायुवापि ॥ सगंधवाहांश्रुतिमप्युदग्रांयद्वर्ष्मभूतांचतुरःसभूयात् ॥७५॥ नरामचंद्रस्यवचोर्थसारंग्रहीतुमा
सीदपिदक्षभावा ॥ किंतर्हिकामाभिनिविष्टचेतायदापवामेनपथाहिलभ्यं ॥ ७६ ॥ परमार्थमन्यमानाप्राप्तुंशूर्पणखातदा
नगामाभिमुखंभ्रातूरामस्याधिमुखंकृतिं ॥ ७७ ॥ गच्छयातुजनितेप्रतिरामंयच्छपाणिमपिवानचतस्मै ॥ पृच्छकेनसु-
खमाप्स्यसितत्वंसौख्यमृच्छतिजनोनुचरोन ॥७८॥ किंतेनलोकावचनीयकारिणायज्जानकींवृध्धतरांस्वपाणिना ॥ लो

टीप १ कर्ण २ श्रोणि व. भार्या ३ हिंसा ॥ छ ॥

केहठात्पश्यतिधर्ममुच्चकैर्भक्कापिनिर्वाहपरःसमूढवान् ॥ ७९ ॥ अगंधवाहामपिवाश्रुतिंत्वांकरोमिचेत्त्वंपुनरागतास्याः
॥यथायथातस्यमनोनुरोधस्तथातथात्वंकुरुकिंमयाते ॥ ८० ॥ रामचंद्रमुखचंद्रनिर्गलद्राषितानुगमसौपरंतपः ॥ गंधश
ब्दविधुरांकृतहस्तश्चंद्रहासकरणेनचकार ॥८१॥ क्रूरापदस्याःसकलाक्रियेतिश्रुतिर्नयोग्यासुमुखोपदेश्या ॥ तयावि
हीनाविहिताविनासाप्रायोगतास्यात्खलसंसदंते ॥ ८२ ॥ करवालनिकृत्तगंधवाहाश्रुतिनिर्गच्छदसृङ्निनादिनी ॥ वन-
मध्यमितस्ततोधमंतीखरमावेदितुमंजसागता ॥ ८३ ॥ महापुरुषसंगतिर्भवतुमेभृशंकामतःप्रवृत्तमितिहेतुनासपदि-
लाक्ष्मणेवर्त्मनि ॥ श्रुतिर्विगलितास्मृतिःकिमपिदाढर्यमापादितानसातपतिवर्ष्ममेशिवशिवायनह्यागमः ॥ ८४ ॥ ख-
रंप्रतापेनखरंतुनाम्नाधाम्नावरंराक्षसनायकानुजा ॥ गत्वाप्यसाम्नाबहुशब्दपोठनाकोपस्यसीम्नावचसाव्यदीपयत्
॥ ८५ ॥ केनासिभद्रेमुखतोविरूपिताकोनामदेहंसुखतोबिमोचिता ॥ खरंप्रसुप्तंनरसिंहमंघ्रिणाहिनत्तमावर्णयमा-
स्तुनेघृणा ॥८६॥ पीत्वाविषंराक्षसिवत्सनाभंस्मर्तानरःसंप्रतिपद्मनाभं ॥ पीतंवसानंवसनंघनाभंकोन्योस्त्युपायोबत

जाल्मतायां ॥ ८७ ॥ पौलस्त्यंभृशविजितत्रिलोकलोकंमांचात्रास्छितमवमत्यदूषणेन ॥शुत्धांत्वांव्यकृतनरःसकोपि
कोपीदेवानांप्रियइतिनिश्चिनोमिचित्ते ॥८८ ॥ पत्रीमदीयोत्हृदयंगतःसन्पलस्यतृप्यंतियथापतत्रिणः ॥ करोतुसंरौतुच
तत्कुटुंबकंममैषकामोभगिनिस्छिराभव ॥ ८९ ॥ रूपंसमंवापिवयःसमानंकृतिःसमानाधिकृतिःसमाना॥ शत्रोर्विभा-
ताविकृतिर्नजातुययोस्तुतौदाशरथीवनेद्य ॥९०॥ पंचबाणसमौरूपेपुंडरीकनिभौदृशोः ॥ पद्मिनींप्रमदांदृष्टारतिंस्वाम
भ्यकल्पयं ॥९१॥ ताभ्यामुभाभ्यांप्रमदांसुरूपांसंभूयतांचाप्यधिकृत्यरूक्षां ॥ इमामवस्छामहमस्मिनीतानाथाययथावाकु
लटातथैव ॥ ९२ ॥ कौस्छःकासीतिपृच्छंत्याअच्छिनत्कर्णनासिकं ॥ यवीयान्राघवस्तूर्णंपुंडरीकोयथानरं ॥ ९३ ॥ व
नेयुवानौविजनेंतिकेत्वंरूपेणकामाविवबृत्धमान्या ॥ दृष्टारतोभूयसुखांविहर्तुंवृत्तास्यतस्त्वामकरोत्सलूनां ॥ ९४ ॥
आजन्मसिद्धेममचैकपत्नीव्रतेसमस्तापिकुलेप्रतीते ॥ अश्लीलमुक्तास्मियतोनुजातैरनंगभूताभवथस्मताभ्यां ॥९५॥ यदा
रतिस्तदैकेनसंगतास्यामितिव्रतं ॥ तवास्तिविदितंलोकेमाकुप्यत्वंतिकानुजान् ॥ ९६ ॥ वनेचरंतींविजनेप्ययमंतुंयदेकप

न्नीमपवादपात्रं ॥ कुर्वंतिसर्वेकुणपाशनेंद्रावंशोप्यरक्षोभवतान्मदीयः ॥ ९७ ॥ इत्यंतिकायावचनंसुतीक्ष्णंश्रुत्वाखर
स्तामथसांत्वयित्वा ॥ शांतांविधायाहपुनर्वदेतःकिंतेस्तिकार्यंकरणीयमद्य ॥९८॥ तस्यास्तयोश्चैत्खरपश्यतोःसतोःकीला
लमाप्ताहतयोःकरोत्धृतं ॥ तृप्यामितद्देहपलेनपुष्टिमान्भवानपिस्यात्सकलंसमंजसं ॥ ९९ ॥ कीलालपाननिरताभगि
नीमदीयाकीलालमाप्स्यतिचपास्यतिमेवरिष्ठा ॥ तद्यातनिट्चरवरास्तदुपांतदेशंसंस्थाभविष्यतिचवोदृढनिश्चयेन ।१००
तदनुतेजातुचिदनवाप्तदुर्दशाःकपाटवक्षसोविपाठादिसहिताःसेवाकर्मचतुराराक्षसाः खरस्यप्रखरामाज्ञांत्रिकस्वरपिकस्व
रवचसाशिरसाचप्रातिगृह्यविकरालमुखींयमराजसखींशूर्पणखामग्रतोविधायविशालायांपर्णशालायामधिष्ठितभद्रासन
मिवास्ततंद्रंवीरलक्षणेनसीताप्रत्यनंतरकृतलक्षणेनलक्ष्मणेनसहितंरोषाक्रुशयादृशाविशातयित्वासज्जीकृतधनुषाविमु-
क्तस्वसमसंख्यशरेणवीरवरेणपरेणकृतयुधःसायुधाःविजयेनविमुक्ताःप्राणैर्वियुक्ताअभूवन् ॥ निपातितान्प्रेक्ष्यचतुर्दशा
पिसंशप्तकान्रामशराप्तदुर्दशान् ॥ साराक्षसीराक्षसवर्यमाप्तंखरंसमागादथतान्निवेदितुं ॥ १०१ ॥ व्यात्ताननःसंप्रतिरा



मसिंव्हःसंप्रेषितास्तेशमनोपपन्नाः ॥ तथाविधस्त्वंभवितापिरक्षोयदित्वमत्रैवतनूमरक्षः ॥ २ ॥ आगच्छचारुमुखिदर्श
यतंनृशंसंव्यालंशमंनयतिराक्षसिमंक्षुयंता ॥ शोकंजहाहितवनूनमनूनमास्तेसर्वप्रशास्तारिखरेमयिदुर्नयानां ॥ ३॥ यद
स्तिपौलस्त्यकुलेप्रसूतिर्यदस्तिराज्ञस्त्वयिमानसंमतिः ॥ अतानुकूलातवरीतिरेषाविराजतांभावुकसंततिस्त्वयि ॥ ४ ॥
ततोब्रवीद्दूषणमग्रयायिनंसेनापातिर्दर्शितवीरविक्रमं ॥ सर्वाभिसारेणवरेणसंमतंकुरुष्वदक्षोस्यभिषेणनेयतः ॥ ५ ॥ स
ज्जीकृतांगोनुचरैःशतांगश्चंगोस्त्युपासंगशरादितुंगः ॥ रंगोपजीव्याहितचित्रभंगःसज्जःसमायोजितसत्तुरंगः ॥ ६ ॥
संभ्रमेणरथिनोरथवर्यंसादिनोपितुरगान्सखलीनान् ॥ पत्तयोरणभुवंचनिषादीनागमाश्रयतिपश्यतवीर्यं ॥ ७ ॥
गृध्रध्वजेतिष्ठतिसांयुगीनेजन्यंखरेयातिबहिर्विधातुं ॥ अजन्यमेतद्वदतीतियोधेशृणोतिनोभाविद्धतोजनोक्तं ॥ ८ ॥ धा
तस्तवातीवमुखंप्रसन्नंस्फुरत्यवामोममबाहुरत्र ॥ कालेद्विषांनिःप्रभतांगतानिमुखानितस्माद्विजयोस्मदीयः ॥ ९ ॥ प्र
धानभूतांत्वमपावृणुष्वयद्ब्रह्मवादीखरदूषणादिः ॥ निदर्शयामिस्वयमस्मदीयंस्वरूपमंतेवसतेतदस्मै ॥ १०॥ यन्नामधे

यकवचेनवृतःपुमान्सन्लोकान्जयत्यतितरांभवहेतुशून्यः ॥ तस्यापिचेत्कवचधारणमस्तिसिद्धैरित्येवचित्रजलधौबद्धु-
धानिमग्नं ॥ ११ ॥ तूण्याःसमादायशरान्सुतीक्ष्णान्रक्षोगणामार्गणदत्तदृष्टिः॥ सद्यःस्वहस्तेनधनुर्विधुन्वन्वीरासनेसु
स्थिरतामगात्सः ॥ १२॥ ततःखरतरःखरस्त्रिशिरसासमंदूषणश्चतुर्दशसहस्रकैःसपदिरक्षसांसेनया ॥ युतःशरशताचिते
रघुवरेणगांधर्वतोगतोदिवमितोध्रुवंनियतमस्त्रमावर्तितुं ॥ १३ ॥ विकर्णनासांसतुरावणानुजांस्वीयानुजेनाशुविधायरा-
घवः ॥ प्राप्तंखरस्यापिबलंसमंततोजघानगांधर्वबलेनसांप्रतं ॥ १४ ॥ एकोमृधेपंचवटीप्रदेशेऽव्यद्रावयद्रावणयोत्धुवर्यौ॥
खरंसुपूर्णःकिलरामचंद्रोद्राक्चंद्रकांतंकलयान्निवासौ ॥ १५ ॥ हतेखरेदुंदुभिताडनंदिविप्रभूतसंतानजपुष्पवर्षणैः ॥
समंसमंतादभवद्रघूत्तमेत्रिदंडकालात्कृतवैरिनाशने ॥ ११६॥ देवैऋषीशैःकृतसत्कृतिःसन्स्वमाश्रमंयावदयंविवेश॥
तावत्ससीतासहितोनुजातःपुपूजचैनंपरिषस्वजेच ॥ ११७ ॥ इतिश्रीमद्दांतकुलावतंसजगन्नाथात्मजलक्ष्मणविरचि-
ताभिनवरामायणचंपूकाव्येसप्तमस्तबकः ॥ ७ ॥ श्रीगणेशायनमः ॥ अकंपनोक्त्याखरहानिरुग्राश्रुतारघूत्तंसकृतात-



दानीम् ॥ सैन्यैःप्रतापश्रवणेनतस्यगतंदशास्येनचताटकेयं ॥ १ ॥ रामस्यसीतामपहर्तुमद्यसमंमयायाहिहिताटकेय ॥
केनासिमित्रोपधिशत्रुणात्वंसविप्रलब्धोगृहमाशुगच्छ ॥२ ॥ शांतोमारीचवाक्यात्पुनरपिवचनादंतिकायाःसमित्धःपं
क्त्यास्योदीप्ततेजावनभवनगतंताटकेयंददर्श ॥ सीतारामस्यहार्याविजनवनगतातत्रकार्येसहायंजानेत्वांस्वीकुरुत्वंममव
चनमथोमैवकालात्ययोभूत् ॥३ ॥ अकंपनोरामशरेणभोक्त्राफेलाकृतोयत्खरदूषणादिषु ॥ भुक्तेषुवार्ताहरतांगतोपिनी
राक्षसंभूतलमस्त्वितीव ॥ ४ ॥ यांवीरपत्नीमपिवीरमातरंमंदोदरींवीरवदंतिपूरुषाः ॥ मंदामवीरांकथमोजसायुतःकरो
षिजिन्हेषिबिभेषिनापथात् ॥ ५ ॥ अनंगकःप्रादुरभूद्यदस्यावनेचरंत्याभृशनिष्कलायाः ॥ अनंगतामापमुखंयदीयम-
नंगकंयत्कुलमस्त्वितीव ॥ ६ ॥ नतस्यदाराहरणेप्रयत्नंकुरुष्वपौलस्त्यकदापिरक्षः॥ भवेद्धिदारःसपदंविदध्यात्तवापिदे
हेस्वसमानरूपं ॥ ७ ॥ यथायथापुण्यजनास्त्वदीयेनाम्निश्रुतेबिभ्यतिरावणार्य ॥ तथातथापुण्यजनोप्यहंसन्नबिभेमि
तन्नाम्निसकृच्छ्रुतेपि ॥८॥ रत्नंरमाराजतमेवमादिरेफादिनामानिमुहुःश्रुतानि ॥ सदैवमह्यंजनयंतिभीतिंवर्ण्यःकथंस्या

द्रघुराजभूमा ॥९॥ पौलस्त्यरामोनहिजातुयोध्योयतोस्त्ययोध्येशतयाप्रतीतः ॥ अकंपनीयद्यपिधैर्यतोस्मिनमानसराव
णमेनुरूपं ॥ १० ॥ सहसानपराजेयोभवेद्रामःपरंतपः ॥ अस्त्रीकृतःप्रयत्नेनतदाजेयोभवेत्कथं ॥ ११ ॥ बाल्येसौमित्रि
युक्तोदशरथनृपतिंयाचितोरामभद्रोयज्ञप्रत्यूहशांत्यैझटितिकृतमहावीरवेषोस्मदादीन् ॥ बाणेनैकेनदर्पात्कृतबहुलगतिं
मांसमंतात्तदानींविध्वाचिक्षेपवार्धौतदिदमहमहोसंस्मराम्यद्यरक्षः ॥ १२ ॥ तातमाकलयमाकलयाहंधर्षितुंरघुवरंप्रभ
वामि ॥ एवमस्मिबहुधापरिभूतःकोबिभेतिनजितोहिपरेण ॥ १३ ॥ एवंमदीयंवचनंप्रशस्तंगृण्हासिनोचेदनुभावयुक्तं
॥स्मरिष्यसित्वंनरनाशनांतेपापीयथांतेकृतदुष्कृतस्य ॥ १४॥ भोभोमारीचयत्तोगुरुरिवसमयास्त्वंप्रगृह्याधुनामांसाकल्ये
नेष्टकल्पान्युपदिशतिभवान्सादरंमेवचांसि ॥ नोचेत्सद्वज्रकल्पांदृढतरघटितांदक्षिणांमुष्टिमुच्चांतुभ्यंशुद्धांप्रदद्यांतदनुगुरु
वरस्यांकृतघ्नःकथंनो ॥१५॥ ज्ञेयंत्वयाराक्षसराजनाहंत्वद्धस्ततोमृत्युमियांतुशत्रोः ॥ रामात्कथंमित्रकरेणमृत्योःशंकयो-
नगूढाप्रियकृद्भवेयं ॥ १६ ॥ सौवर्णोभवहरिणोपिचित्रबिंदुर्दुर्वर्णैश्चररघुनाथवासदेशे ॥ वैदेहींझटितिकुरुष्वमोहपात्रं



गच्छत्वंतदनुयथेष्टमंगदेशं ॥ १७॥ दृष्ट्वात्वांकनकमृगंप्रकृष्टचित्ताब्रूयात्सासपदिधवंसमानयैनं ॥ तस्मादप्यपसरतस्त्सु
तीक्ष्णबाणविद्धोजात्वपिवदलक्ष्मणेतिसीते ॥ १८ ॥ एवंत्वंसहचरकार्यमाचराद्यच्छन्नेतांप्रसभमपाहरामिसीतां॥रा-
ज्यार्धंचतुरददामितेसुखेनस्वाराज्यंसमनुभवस्वनिश्चयेन ॥ १९ ॥ नसंश्रवंमेवचसःकरोषियद्विश्रवःपुत्रदृढेनचेतसा ॥
त्वदाश्रवोहंप्रभवामिसद्योनासाधुसंगःकिमुवानकारयेत् ॥ २० ॥ उक्तानुरूपंप्रातिरूपमुग्धंकुरंगरूपंकुरुसद्वयस्य ॥ य
तोमदीयासकलार्थसिद्धिर्यत्प्राप्तरूपोसितथाकृतौत्वं ॥ २१॥ शतांगमारुह्यजवेनतावुभावनंगभावस्यचपात्रतांगतौ ॥
तरंगमालाकुलगौतमीतटेकुरंगकर्मंदिवरौबभूवतुः ॥ २२ ॥ तदनुपुण्यजनगणनीयेनरावणेनानुनीतोरघुनायकपर्णशा
लापरिसरप्रदेशेभरण्यभुगिवरक्षोवरेण्योनरमृगगणानामशरण्यस्ताटकेयोमणिविषाणींद्रनीलश्रवणोनानावर्णमणिग-
णवर्णशोभमानग्रीवोवैदूर्यचरणोजिष्णुधन्वसवर्णोर्ध्वीकृतलांगूलोधरण्यामकृतचरणतयैवसंचरणदक्षिणःसीताप्रलोभ-
नार्थविविधकृतिधुरीणःक्षणेनमारीचःकपटहरिणःसमपद्यत ॥१॥ चूतादिपुष्पाण्यपचीयमानावनेचरंतीमिथिलेशकन्या ॥

अदृष्टमप्यश्रुतमाशुरंकुंसाक्षादपश्यत्पुरतोविचित्रं ॥ २३ ॥ आगच्छतंपश्यतमत्रवीरौभर्तश्चदेवश्चविचित्ररंकुं ॥ आ-
नीयमह्यंदिशतंमनोज्ञंकौवाद्भुतायस्पृहयेन्नजन्युः ॥ २४ ॥ रामरामनचशंबरएषकुत्रचिच्छ्रुतचरोनचदृष्टः ॥ संचरन्नृवि-
पिनसीमनिराज्ञोयोजघानसहिराक्षसपाशः ॥२५॥ यद्यस्तिमारीचनराशनोह्ययंहंतव्यएवानुजमामकीमतिः ॥ अनेनपू
र्वंबहवोविकर्तिताःक्ष्माभृद्वरालक्ष्मणकाननेचराः ॥ २६ ॥ भवान्जटायुःपरिगृह्यसीतांयावत्समेष्यामिशरेणहत्वा ॥ मृ-
गंप्रगृह्यापितदीयचर्मस्थानेस्थितौसंत्यजतंनचैनां ॥ २७ ॥ अनुपधीरघुराजसुतस्तदाजनकराजसुतामुपधीकृतां ॥ प
रिनिवेद्यतयोःसदुपाधिनाशरधिखड्गधनुर्धरआव्रजत् ॥२८॥ क्वचित्प्रदृश्यंक्वचिदप्यदृश्यंक्वचित्स्थिरत्वेनविमोहयंतं ॥मा
रीचमेनंमृगरूपगूढंजघानबाणेनरघूत्तमःसः ॥ २९॥ मारीचःप्रखरशराहतस्तनुंस्वामापन्नोमनसिविचिंत्यतत्कृतिंसः ॥
हासीतेनुजयुवयोःकथंभवेदित्याभाष्यव्यथितमनाजहौतदासून् ॥ ३०॥ योगेशोबतसमभून्ममानुजातोवाचंतामकृत-
मृगोनयातुधानः ॥ मारीचोयमितिविचिंत्यचेतसीत्थंहत्वान्यंमृगमगमत्कुटींस्वकीयां ॥ ३१ ॥ विमोहयंतंकपटेनकांतं

मारीचमाशुप्रियकंपरस्य ॥ सदानुकूलंनिजघानरामःशास्तानिहंतिप्रियकंहिदुष्टं ॥३२ ॥ आर्तस्वरंरामनिभंविदेहजा-
श्रुत्वाब्रवील्लक्ष्मणमुग्रतेजसं ॥ गच्छाशुजानीहिविपन्नमग्रजंनमेमनःशुध्यतिशब्ददूषितं ॥ ३३ ॥ विदेहजेकस्तवकां
तमुग्रंनिहंतुकामोहिजिजीविषुःस्यात् ॥ वनेचरंतंगहनेमृगेंद्रंनजंबुकस्तंनिकषापिगच्छेत् ॥ ३४ ॥ एतावदासीन्मयि-
देवरत्वमितोपिमय्येवपतित्वमास्तां॥ त्रेताजनिर्यद्यपिदेवरास्मितिष्योद्भवांमामपिवित्थिसद्यः ॥३५ ॥ अस्तीहसत्यंप्र
कृतिर्मदीयानद्वापरेदेवरतेतिविद्धि ॥ त्रेतोपवर्तिन्यपिदेविधृष्टेतिष्योद्भवात्वंभवमास्मखिन्नथाः ॥ ३६ ॥ यद्रक्षःप्रकृतिर
सित्वमुग्रवाक्याद्यास्त्वोद्याभिहततलेवनेजहामि ॥ त्वामद्यत्वमपिनिहंस्सिराक्षसेशंजानीयांभवसुखिनीप्रतीपदृष्टिः॥३७॥
अग्नौप्रवेक्ष्यामिसमाप्नुयांवारूपांतरंवाविषधिंपिबेयं ॥ दशासमुद्बंधनकेप्रवृत्ताभूयांपरंराममृतेनजाने ॥ ३८ ॥ अग्नौप्रवे
शाद्भवितात्वदीयंरूपांतरंवाविषाधिंपिबेर्वा ॥ कुत्रापिसुस्थाभववीरपत्नीनलक्ष्मणस्तेभवितांतरायः ॥ ३९॥ स्त्रीणांस्वभा
वोविदितोस्तितीक्ष्णःसंबंधतस्ताअभिवादनीयाः ॥ पदेपदेतामभिवीक्ष्यमाणोविचारयन्रामसमीपमाप ॥ ४०॥ यातेदे

वंरिलक्ष्मणेसुवयसंसीतांविविकस्थितांक्लिष्टांभर्तृवियोगतोप्यतितरांरम्यांदशास्यस्तदा ॥ काषायंवसनंवसानउदगा-
च्छत्रींचसव्यंश्रितौव्यक्तंदंडकमंडलूपरिदधन्मिथ्यापरिव्राजकः ॥ ४१ ॥ आगच्छभिक्षोइतआस्यतांतेगृहाणपाद्यंफल
मूलकादि ॥ पतिर्गतोमेहरिणंनिहंतुंतदागमंपालयतावदत्र ॥ ४२ ॥ कर्मंदिवेषःसमभूदृढांगोयद्ब्रह्मवंश्यःकिलकाम
तक्षणात् ॥ साक्षात्कृतिःसाधुतयाभवित्रींविदेहभावंगमयेच्चकालतः ॥ ४३ ॥ पाराशरीभावत्वदामयाद्ययत्सुंदरिप्रापि
तवांघ्रिदेशः ॥ दृक्स्पर्शमात्रेणतुशक्तिपातात्सरूपतामाप्तुमिवप्रियस्य ॥४४॥ आस्तामिदंत्वामपहायदिव्यांगतोनिहंतुंह
रिणंत्वमेका ॥ कस्यासिवामोरुकिमस्तिनामकथंनृशंसेविपिनेस्थितिस्ते ॥ ४५ ॥ कामंमदीयंनतिरस्कुरुत्वंरतिर्विनश्ये
त्सुदतिप्रकामं ॥ याभ्यांविहीनंजगदेवसर्वंनश्येन्नतेर्हाभवितातपस्या ॥ ४६ ॥ रघोस्तृतीयःश्वशुरोमदीयोभर्ताचदेवा
चधनुर्धरैकः ॥ यस्यद्वितीयास्मिसदेवुरग्र्यश्चतुर्थकेनास्यसिपंचकस्त्वं ॥४७ ॥ इतितस्याःक्रूरगभीरंव्याहारवरंश्रुत्वाशू
रतरोनराशनवरःप्रविदारणदारुणोरावणोनामधीराणामपिप्रवेशनेशंकास्थानस्यलंकाख्यानस्याधीश्वरोदशकंधरोविंशति



करपंजरजर्जरितचंद्रशेखरधराधरःसहसासाहसिकतयाविजितदेवासुरनरेश्वरराजराजोबहुशारदाराधितेश्वरप्रसादितया
हुतीकृतवैश्वानरशिरःकंजःप्रायशस्तेश्रोत्रपथमागतःस्यात्सएषत्वत्कृतेपरिव्राजकतामंगीचकारसर्वैः शिरोधार्यानिधार्या
भवमेभार्यापरिचरिष्यंतिपंचदासीसहस्राणिकिंबहुनांतःपुरचरींमंदोदरीमपिबहिःकुर्यामितरासांनामापिनगृण्हीयामि-
त्युत्कामद्याहृतमुररीकरोतिनवेत्याशयंबुभुत्सुर्विरराम ॥ २ ॥ रघोस्तृतीयःप्रथितःकिमाख्योभर्तापिदेवापिचतौकिमा
ख्यौ ॥ त्वमाख्ययाकस्यसुतासिराज्ञश्चतुर्थतःपंचकथंत्यजेयं ॥ ४८ ॥ यदुत्तरंतेवदनानिनाम्नस्तदुत्तरंतस्यरथोरितवि
त्तः ॥ स्त्रीत्वेयुवानोपिचयत्रपुंस्त्वेइष्टेरमंतेननुयोगिवर्याः ॥ ४९ ॥ नाम्नासभर्तापिचदेवरोमेलक्ष्मीवतोनामधरश्चकास्ति
॥ गृण्हंश्चतुर्थाश्रममप्यभीतिःप्राणान्कथंहास्यसिपंचनत्वं ॥ ५० ॥ मातुरुत्पद्यतेयेनजगत्तन्नामपूर्वकः ॥ राजाममपिता
ज्ञेयोनामतस्त्वंकिमिच्छासि ॥५१॥ श्वश्वामुदेमेश्वशुरःसुपुत्रौविवासयामासवनेचतुर्दश ॥ समाविहर्तुंविपथान्निहंतुंजा
नीहिपुण्यानवितुंसचेतनान् ॥ ५२ ॥ भार्यात्वदीयाभविताशुकोकिलापिकोसिनाम्नाभववावनप्रियैः ॥ द्रष्टास्यतस्त्वं

टीप १ काऊ किल अपिकः भासेप० कोकिला पिकः अपि २ कोकिलः प० अरण्यप्रियः

सुरभिस्त्वयत्नतःसभाजयेरन्नपिदेवतागणाः ॥ ५३ ॥ तदनुकोपनात्प्रणयकोपसमुत्सारणचतुरःपंचनाराचनाराचप्रपंच-
साचीकृतमुखोदशमुखोविकचाविकचांश्रोत्रयोःक्रकचसदृशींतदीयांवाचमाकलय्यप्रत्यर्थिनोस्त्रभूतांतांस्त्रियंपराभावयितुं
तेनचाभियातिंशमयितुंसप्रभावंमहताकोपाडंबरेणवर्णयितुमारभत ॥ ३ ॥ करंसमाहत्यकरेणसंभ्रमाद्याकोशयंन्छ्म्श्रु-
लवान्पुनर्भवैः ॥ आरक्तनेत्रःकृतकोपडंबरःसीतांवशीकर्तुमियेषरावणः ॥५४॥ लंकानगर्यांविरराजराजायोराजराजोब
ततद्विजेता ॥ नतेकथंश्रोत्रपथंगतोभूत्स्छानेशिवस्छानमभूत्स्मयस्य ॥ यत्पुष्पकंचारुदतिप्रकामंविराजमुल्लंघयितुंसमर्थं
॥ तद्राजराजस्यपराक्रमेणमयात्हृतंपश्यसिचेत्प्रयाता ॥ ५६ ॥ पुन्नागतामाप्यमरुत्वदाद्यास्तिष्ठंतिमेसंमुखमप्यदक्षि
णाः ॥ नतत्रतन्वीभवतीभवंतीधृष्टेयतिंप्राप्स्यतिनोकिमेतं ॥ ५७ ॥ विंदंतिचेस्त्वांसुदृशःसुशक्तिंतदाशिवंयास्यसिसर्व
दैव ॥ शिवापिनस्यात्प्रतिकूलवृत्तागातिश्चतेचंद्रमुखिप्रशस्ता ॥५८॥ राजावैश्रवणोगभीरमहिमादेवैःसदावंदितःकर्णा
कर्णिकयाश्रुतोस्तिनितरांदिक्पाळचूडामणिः ॥ तद्दंश्यंस्वमवैषिविक्षिचपरंकर्मेदमीदृग्विधमैकागारिकवत्प्रवेशमपितेजा

१ कामधेनुप० वसंतं

नाम्यपेहिद्रुतं ॥ वामेनसीतांपरिगृह्यवेणावधस्तदूर्वोरितरंविधाय ॥ करंसमास्छायरथंचहैमंवालेययुक्तंप्रययौकृतार्थः ॥
॥६०॥ विनाशयत्वंदशवक्त्रसंज्ञंरक्षोभयंमांचयशस्त्वदीयं ॥ निष्कंटकांवीरविदेहिपृथ्वींसकंटकांपोष्यतनुंप्रतापात् ॥
६१ ॥ नद्यःप्रतीपस्तिमिताभवंतिवायुर्युवासन्नहिवातिशीघ्रं ॥ तरूरुतंनैवकरोतिपत्रैर्मयिस्छितेकिन्नशृणोषिमांत्वं ॥६२
वक्त्राणांदशकंतवास्तिविदितंदोष्णांतथाविंशतिःपादानांचचतुष्टयंदशमुखप्राप्नोषिगर्वंततः ॥ वक्त्राणांचसहस्त्रकंप्रवित
तंदोष्णांपदानांतथायस्यास्तेप्रबलोरिपुस्तवभवेज्जानीहिकांतोमम ॥ ६३ ॥ नभसंगमोदशमुखोप्यधुनासौपरिगृह्यमां
झगितिनोत्पातिताकिं ॥ नभसंगमोयदिचकश्चिदिहस्यात्सतुजातुतारणपटुर्भवितावा ॥ ६४ ॥ गोदावरिस्त्वत्तटवासयाम
यायदार्यपुत्रःप्रमदेनभुक्तः ॥ नमामितांत्वांलघुशंसभर्त्रेत्हृतादशास्येनवधूस्तवेति ॥ ६५ ॥ सहकारयस्त्वमसिहस्तधृता
ढ्यप्रघणात्हृतोदभरत्वात्धिमितोमे ॥ त्वयिविश्वसेदितिचशंसनिरागाअबलातुयातुपतिनापत्हृतास्ते ॥ ६६ ॥ प्रसंगतःसं
गातरासगंगेबृहत्तरंगेकृतपापभंगे ॥ द्रवस्स्वभावासियतस्त्वमार्येरामायमांशंससियातुनीतां ॥ ६७ ॥ आमंत्रयेवःस्छि

रतांगतानिवराणिसत्वानिचयानिवास्छ ॥ केषांचिद्रासीदथवापिनासीत्सहस्छिति:शंसतवोनमोस्तु ॥६८॥ रामोस्तिद
क्षः प्रबलोस्तिपक्षःसलक्ष्मणस्तद्वरिमाममासीत् ॥ रक्षोत्द्धतावस्तिजगाद्विपक्षंदिष्टेनुकूलेसतिसर्वमस्ति ॥ ६९ ॥ कोवा
विलापंशृणुयान्मदीयंतथाप्रलापोभवितायथान ॥ बिभीहिनोपक्षिपतिस्तदाहक्कसुप्रलापास्त्विवतिसाजहर्ष ॥ ७० ॥अ
भिजनःप्रथितस्तवरक्षसांवरसतत्रभवान्कथमीदृशं ॥ प्रकुरुतेयदिलोकविगर्हितंनखलुतेभविताकुशलंसखे ॥ ७१ ॥ रा
जादंडधरःसचेद्विपथगःसर्वंनिमग्नंजगद्दुःखांभोधितरंगजालकुहरेनोन्मज्जितंजात्वपि ॥ स्यादेवंकुरुमास्मरावणपुरंदेशेषु
दारेषुवारामोधर्मपरोपराध्यतिनचेत्त्वंसर्वथानश्यसि ॥ ७२ ॥ चलसिपंक्तिमुखाशुपदात्पदंवदसिनापिचतस्करवत्कृतः ॥
परिजहासिनरामवधूंयदिप्रचलिताअसवस्तवसांप्रतं ॥७३ रामोस्तिनेताजगतीतलस्यतथानुजरतस्यपराक्रमेण । विना
पितौतेसहसंयुगंस्यात्प्राणानरक्ष्याअधुनामयापि ॥ ७४ ॥ संजातरोषःसजटायुषोक्तोग्रहीतुमुत्कोऽस्यदशाननःसन् ॥
पंचस्वनामोपपदार्थसंख्यैःप्राणान्जघानाशुशरैःपतंगं ॥ ७५ ॥ यन्मार्गणैस्तीक्ष्णमुखैर्निरुध्दःसस्थूललक्ष्यःपतगेंद्रवंश्यः



॥ प्राक्सामगीतंधनदानुजंतंतत्स्वंतथालब्धुमरुंतुदोभूत् ॥ ७६ ॥ रथ्यान्खरान्वामकरांच्छरान्सछत्रंरथंचामरयोर्युगंच ॥
तद्ग्राहिभिःसारथिनापिसार्धंसपक्षघातंनिजघानगृध्रः ॥ ७७॥ संक्रुध्दयोःकौणपगृध्रराजयोर्मुहूर्तमात्रंकलहोऽव्यजायत॥
मंदस्यगृध्रस्यकृपाणधारयापत्पक्षपाश्वंसतदासमच्छिनत् ॥७८॥ यदात्वभिहितंमयामृगविहिंसनंरामतत्तदैवनतिरस्कृ-
तंममवचोविमृश्यक्षणं ॥ तथाकृतमभूस्त्वयायदिविपन्नमेसांप्रतंनकेवलमृजूभवत्यपिवधूर्नरस्तादृशः ॥७९॥इतिबहुविलपं
तींरामपत्नींतदानींकरकमलतलेनाहत्यवेणींप्रगृह्य ॥ चलितमिवयदासीद्रक्षसातत्रकार्यंकृतमितिपरमेष्ठीव्याजहारप्रस
न्नः ॥८०॥ भृशंप्रदग्धोसिपुलस्त्यपुत्रयदद्यमांत्वंनयसेस्वगेहं । गेहंपुरंचाख्यपिभस्मभूयान्नदारहर्तुःकुशलंकदापि॥८१॥
नाथस्यसाहाय्यमर्माप्रकुर्युस्तदर्थसत्याकृतयेस्वभूषां ॥ स्वीयोत्तरासंगममुंचदध्वादितीवसारावणनीयमाना ॥ ८२ ॥
गिर्यग्रगान्रावणनीयमानाप्लवंगमान्पंचविदेहजाता ॥ भावंस्वसंख्यागतमाशुशत्रुंनेतुंसमर्थानिवतान्ददर्श ॥८३॥ तद
नंतरमंबरचरोरजनीचरचक्रवर्तीदशशिराःपरशरीरहरवीरवरशरासननिर्गतशरइवविरचितांकाधिरोहांनरवरवरारोहांपा-

टच्चरइवपरिधारयन्नगरसरोवरसरित्धराधरविसरान्सागरानपिव्यतिलंघ्यदुर्लंघ्यप्राकारांपुरंदरपुरीमपिशिरसाघट्टितु
कामामिवोदग्रागारशिरोगृहांलंकापुरींप्रविश्यविदेहराजतनयामंतःपुरेतत्तर्जननिर्भर्त्सनवशीकरणकर्मसुदुष्कर्मरचना
प्रखरानाशरदारानिक रान्प्रवीरतरानष्टरजनीचरांश्चरामशरनिहतखराधिकारस्थानजनस्थानाधिकारेस्वात्मानंचकृतक्र
स्यतायामधिरोपयामास ॥ ४ ॥ सुतनुवितनुभावंत्यक्तसर्वस्वकृत्येकिमितिभजसिरीढांपादयोःसन्नतेते ॥ यदपितवसम
स्तंदष्टमासीन्मदीयंतदपिनदृढतांकिंजातुचेतःप्रयाति ॥ ८४ ॥ दशमुखविमुखःस्याईदृशेनार्यकार्येभवतिभविकजातंम
द्वचश्चेद्दधासि ॥ मनसिनचविधत्सेचेद्धिजानीहिदृइयेभजसिविमुखतांत्वंदाढर्यमंगीकरोषि ॥ ८५ ॥ अत्रांतरे॥पृथ्वीत्व
ज्जननीफलायजगतोनिद्रांपुरस्कृत्ययत्संतृप्तापयसोर्पितस्यघनतोधातुर्नियोगान्मया ॥ संतुष्टेनयथातथैवभवतीतत्कन्य
केतिब्रुवंस्तत्पाणौप्रवितीर्यपायसमथोपातुंमरुत्वान्स्थितः ॥ ८६ ॥ गृहीत्वातध्वस्ताध्वविरिदमहोदिव्यमितिसातथा
भर्त्रेदेत्रेसपदिविनिवेद्यैवविजहौ ॥ शुचंतांपश्चात्तच्छुचिविघसतामाप्तमिवतज्जजक्षप्रीत्यायद्विविषदनुनीतेतिनितरां ॥



॥ ८७ ॥ मागलासीरघुवरनारिरावणेनक्लिष्टास्मीतिचमनसानाचिंतयेथाः ॥ देवानांननुभविताशुकार्यसिद्धिर्द्रष्टात्वांरिपु
विजयीपतिस्तवाग्रे ॥८८॥ विद्रावितोसकृत्पूर्वंदुःखकृद्रावणेनयः ॥ जगामनिद्रासहितःस्वंद्राग्वेश्मशचीपतिः ॥८९॥ ऐ
श्वर्यंसकलंव्यदर्शयमहंवध्यैरघूणांपतेस्तुभ्यंतत्रतिरस्करोषिरभसान्मांप्रार्थयंतंचिरात् ॥ शोकंचाप्युररीकरोषिचततोब्दां
तंभवेज्जीवितंभावत्कंयदिवश्यतांननयसेस्वात्मानमध्धाममम ॥ ९० ॥ किंतेस्याद्विपिनचरेणभाग्यभूमापत्यायत्सहजसप
त्नवाक्यमात्रात् ॥ त्वंतावद्भवललनाललामभूतात्रैलोक्यंभवतितवाद्यमत्प्रसंगात् ॥ ९१ ॥ खरादिसंक्षुण्णपथस्यसद्यो-
द्रष्टाभविष्यन्नभवान्यदीतः ॥ रामस्यबाणैरणकर्कशस्यराजाभविष्यत्त्रिजगत्प्रणेता ॥ ९२ ॥शोकंविजह्यादधुनायथेयं-
तथाकुरुध्वंरुधिराशनार्यः ॥ वश्यायतःस्यादथवाधुनैनामशोकवन्यांनयतप्रयाताः ॥९३॥अत्रांतरे ॥ हत्वामारीचमुग्रंझ
टितिपथितदाद्दुर्निमित्तैःपरीतस्तावत्सौमित्रिमग्रेविगतमुखरुचिंवीक्ष्यतंरामचंद्रः ॥ सौमित्रेमैथिलींत्वंकथयकथमहोत्यक्त
वान्निष्कृपःसन्बालासाहाय्यहीनाविजनवनगतानान्वचिंतीत्यवादीत् ॥ ९४॥ तद्दुर्वचोबाणगणेनदूरंक्षिप्तःसमागांतवपा

दमूलं ॥ आज्ञांत्वदीयांपरिभाव्यनैनःसंपादितंजातुकुतोमयाद्य ॥ ९५ ॥ स्नातुंगतावाकमलानिहर्तुंविचेतुकामाकुसु-
मानिसीता ॥ दूरंगतायातुजनेननीताभीतामृतालक्ष्मणकिन्नजाने ॥ ९६ ॥ संचिताशालयाशालानिचितायोग्यवस्तु-
भिः ॥ विचितासानतत्रास्तेनिश्चितंकेनचिद्धृता ॥ ९७ ॥ उषिताःस्मसुखेनतेप्रतीरेबतगोदावरिसिंधुसुंदरि ॥ सहवासान्हि
याममाबलायाः कथयस्तेनमदोनमोस्तुते ॥ ९८ ॥ ताडदाडिमकलांगलिबिल्वाबादरामलकचूतकसालाः ॥ दृश्यतांग
तवतीयदिसीताकथ्यतांफलकुचास्तियतःसा ॥ ९९ ॥ मृगास्छसीताक्कचकेननीताजानीतचेज्ज्ञापयतेतिवाक्यं ॥ निशम्य-
तेस्त्राविलचक्षुरंताअवाङ्मुखाःशीघ्रतयाबभूवुः ॥ १०० ॥ पश्यंतोनभसिपुनःपुनर्नदंतोगच्छंतःपथिदिशितेचदक्षिणस्यां ॥
ज्ञात्वेदंसपदिललामरामरामचेतव्यादिगियमितोहिदक्षिणेति ॥ १ ॥ पृष्टास्त्वयासाधुतयाकुरंगाःपश्यंतिकाष्ठांप्रतिदक्षि
णांसा ॥ अतोविमृग्येतिमतंमदीयंभ्रातःशुभंतत्पशुचेष्टनोत्थं ॥ २ ॥ मृगाःखगावामनुजानगावादिशंत्यवाचीमथवाप्र
तीचीं ॥ दिशंतुसामेस्तिविवेचनीयाजिजीविषामेवनितामृतेन ॥ ३ ॥ तदनुससूनुर्मनुजपतिसूनुरवनौमृदितान्यपिसुष

मयानवीनानिकुसुमान्यवलोकयमानोभोभोलक्ष्मणतानीमानिमयादत्तानिजनकतनययाविधृतानिपुनः पुनर्भ्रांतमानसो
मध्येवनंगिरिंवासरितंपश्यन्दर्शयकथयमद्वनितामन्यथाचूर्णयिष्यामिशोषयिष्यामिभूतिसात्करिष्यामीतिप्रलपन्यक्षप-
त्यवरजस्यरक्षसःस्ववनितायाश्चपदंपदानिभग्नंधनुर्निषंगंशतांगंक्षतजाविंदून्कांचनकवचंशतशलाकंच्छत्रंरथ्यान्खरान्-
च्छरान्हतंसारथिंचपश्यन्नतीवक्रोधमाहारयामास ॥ ५ अस्त्यत्रक्षतजंयतोघनतरंतस्मात्सतीभक्षिताक्रव्याद्भिर्नचदैवतैः
किमपिताद्विघ्नःसमासादितः ॥ तस्माद्वीरवराधुनास्तिसकलंजातंप्रतीपंजगन्नास्यास्तेदृढमंतरीपमपिवादुःखांबुधौमज्जतः
॥ ४ ॥ भूतानिनस्वांप्रकृतिंत्यजंतिस्वतोगभीराणिकथंत्यजेत्तां ॥ भूतंमहत्तत्प्रकृतिंपुमांस्त्वंसीतांसुकीर्त्याविचिनुष्वराम ॥
५ ॥ इतिलक्ष्मणस्यवचनंसुमहार्थंत्द्वादिराघवःसमनुचिंत्ययथार्थं ॥ कथयाधुनाकथमितःकरणीयंभवचापदब्धितरणेरयि
नेता ॥ ६ ॥ तरुवृंदमस्तिनिकटेसरितोस्यागिरिगव्हराणिगुरुपापहराणि ॥ मृगयावतंसपदिरामतवार्थेविजहीहिताप
मपिशत्रुभयेन ॥ ७ ॥ ततःसरामोवनितांविचेतुंपथाचलन्पर्वतकूटदेहं ॥ ददर्शपक्षींद्रमुवाचसीतांजहारयद्यात्वनुजात

दीप १ मृगयाव तानितिपदद्वयं ॥

पश्य ॥ ८ ॥ शरारुरेषराक्षसोजहारमामकींस्त्रियंचखादतांसमार्दवांयतस्ततोमुखेऽस्त्रवान् ॥ भवाशुगःसहाशुगोभवा-
म्यहंधनुर्धरोनिहन्मितंब्रुवेमितंप्रतिक्रियांकरोम्यहं ॥ ९ ॥ वनिताहरोस्मिनहिपत्ररथःकलयेभवंतमपिदाशरथिं ॥ वचनं
मदीयमपिनापरथायुधितस्यपातितमवेहिरथं ॥१०॥ धार्ष्ट्येनराक्षसवरः सविधायसीतामंकेनसंगतिमतींरभसाज्ज्वलन्सः
॥दृष्टोमयापिचरणेदशनैर्विदष्टःप्राणैःसमंममविदेहसुतांनिनाय ।११। तदनुसदनुजन्मारामचंद्रोदयालुःपथिविगलितसंज्ञं
रावणच्छिन्नपक्षं ॥ मुहुरपिपरमार्त्यानिःश्वसंतंजटायुंपितृसखकथयत्वंसर्वमात्मीयवृत्तं ॥ १२ ॥ पक्षींद्रःपितुरपिमित्रम
स्तिपक्षश्चित्तेनःसमभवदंगयःसपक्षः ॥ सौमित्रेसचयदिदृश्यतेविपक्षोऽव्यत्यस्तंसकलमितिब्रवीतुलोकः ॥ १३ ॥ दिष्टे
नुकूलेंबरचारिवर्यःसपक्षआसीदपियःपितुर्मे ॥ मित्रंप्रसव्येसहचारिणोसानेष्टेतिकालोस्तिबलीपुमान्न ॥१४॥ आश्रया
मियमहंससमूलंक्षिप्रमेवयदिनश्यतिविद्वन् ॥ पश्यलक्ष्मणमृतोयदिपक्षीह्यापदंकथमिमांप्रतरेयं ॥१५॥ नामग्राहोय
दीयोजनयतिहृदयेसाध्वसंसज्जनानांपौलस्त्यःकैकसेयस्तवरहसिवधूंवेणिभागेप्रगह्य ॥ यातःसन्मार्गमध्येप्रसभमपि

मयाद्वंद्वयुत्धेपरास्तःपश्चाच्छ्रांतिंविदित्वाममकठिणमनाःपक्षपादंचकर्त ॥ १६ ॥ जानीहिरामभवितातवशत्रुनाशोभार्या
मिलिष्यातियथाभवतस्तथास्यात् ॥ विंदोमुहूर्तइतिनिश्चिनुनष्टलब्धौचिंतामणिर्दशमुखेननचावबुत्धं ॥ १७ ॥ किंवीर्यः
क्वचतस्यवापिवसतिर्ज्ञेयापतत्रीश्वरत्वंजानासिसमग्रमस्यसपदिप्रब्रूहिमह्यंगुरो ॥ एवंवाक्किपुनःपुनारघुवरोयावज्जटायुः
पतन्व्यादायास्यमपिप्रसार्यचतनुंजीवंजहौमुग्धधीः ॥ १८ ॥ तदनंतरंराजराजावरजेनराक्षसराजेनसंपातेरवरजंगृध्रराजं
जंगतायुषमनिमिषंजटायुषंनिरीक्ष्यपक्षींद्रेणसमस्तमुनिशरण्येदंडकारण्येबहुकालंवसतासतानिजंराज्यंपरित्यजताम-
स्कृतेरक्षःपतिनानियुध्यपरलोकनिध्यानबत्धादरेणात्रशांतमतइतोपिसीताहरणजंदुःखंविगुणमस्तिसौमित्रेदशरथइवप
त्ररथोप्ययंसंस्कार्यःसर्वथापर्यालोचयदारूणिनिर्मथिष्यामिकृशानुंसत्करिष्यामिगच्छतुमदनुज्ञातःसंशप्तकानांगतिमिति
व्याल्हत्यसत्कृत्यनिहत्यमृगततिंसमुत्धृत्यतत्पललानिहरितशाद्वलेभूमितलेपतगेभ्योविसर्जयन्सानुजोरामचंद्रोगोदाव-
रीरोधस्याप्लुत्यतस्मैसंस्थितप्रस्थितायभुवनोत्तमंभुवनोत्तमंदत्वापुनरपिसीतांमार्गमाणोमहारण्यंप्रतस्थे ॥ ६ ॥ सा

जात्यात्पक्षिणोमीहरिणपललतः पिंडखंडस्यतृष्णायेनास्मत्कार्यहेतोरणभुविरभसान्न्यस्तएवास्तिदेहः ॥ सत्वंज्ञातेयतृ-
ष्याभवसुहिततरोलोकभोगस्यतृप्तोयत्कृत्यंतेकृतज्ञप्रतिविहितमपिप्रायशस्तूनमस्ति ॥ १९ ॥ यासागमिष्यदपिवाव
नितामदीयाकिंवाभविष्यदपिलक्ष्मणदातमस्य ॥ यस्तेनदुष्टचरितेनहिरावणेनकृत्वानियुध्दमपिनापतमर्थमध्धा ॥ २०
जटायुराद्यःपततांहिमानीकृतज्ञधुर्यःसकथंदशास्यं ॥ सीतांहरंतंपथियःस्नुषांस्वांयन्मन्यमानोनुकथंसहेत ॥ २१ ॥ अ-
त्रांतरेंतरिक्षचरवाक्यं ॥ गृध्रेणकिंतत्सुकृतंकृतंस्याद्यन्निर्वृतिंस्निग्धतयाकरोति ॥ रामोद्भुतंनाकृतयःस्ववप्तुःकोधीश्वर
स्यास्तिकृतेर्विमाता ॥ २२ ॥ नामापियस्यविवशोनुगृणन्मुमूर्षुःकर्मोत्तरंव्रजतिलोकमितःकृतार्थः ॥ साक्षात्सरामइहय-
स्यदृशोःसदेशेकिंतस्यवाच्यमितिगच्छतिवैधलोकं ॥ २३ ॥ अग्रेप्रचारेरघुनायकस्यमध्येवनंलक्ष्मणआशराबलां॥कांतो
भवाद्येतिचकारवक्त्रीमयोमुखीशूर्पणखासरूपां ॥२४ ॥ एकस्मैपुरुषायदर्शितमिदंतुंडंपरैर्दृश्यतांनेयंस्यादितिराक्षसीर
रघुवरस्यात्यंतलज्जावती ॥ दृष्टयोःसन्निकटेहटाद्विदधतीपृष्ठतदायोमुखीघोरंकाननमभ्यगच्छदितिसास्मर्त्रींस्वकीयाग



सः ॥ २५ ॥ एकोदनुःश्राक्समुदायकालादनाप्तयोराघवयोःस्छलींतां ॥ अनाहतःप्रापकबंधतांयद्विस्माययेत्कस्यत्द्वेदेन
तावत् ॥ मृगभुजंविभुजंदनुनामकंपथिकबंधमुभौरघुनायकौ ॥ कृतविवादमिमंकरवालतोप्यकुरुतांविभुजंकिमिवाद्भुतं
॥२७॥ यद्युवांवनमिदंप्रतिपन्नौमामदोषमपिवाकुरुतंयौ ॥ मौनमाघवनवैधवचस्तोराघवावितिहृदाविचिनोमि ॥२८
यावन्नचास्तंप्रतियातिमित्रोगतैर्भवंतौक्षिपतंमदीयं ॥ वर्ष्माभ्यमित्रौभवतंसुमित्रंवक्ष्याम्यमित्रघ्नमुदारसत्वं ॥ २९॥ उ
द्गर्जतोवेगवतःस्वयोनितःसंस्छांर्कबंधस्यमहत्तरेवटे ॥ कुर्वंःप्रयत्नेनयदैधसंगतांयतोभवेत्प्राणभृतांहिजीवनं ॥ ३० ॥ त
दनुदाशरथिसंस्कृतोदनुकबंधोरक्षः संबंधिनींतनूमपहायतनूनपातःस्वकीयांस्वीकुर्वंस्तारापथगतोमहामहिमनूरामरामय
थातेसीताधिगमस्तथाकथयिष्याम्यवितथंयेनसत्पथगामिनंसखायंत्वंकुशलमाप्स्यसि ॥ ७ ॥ घनाघनप्रख्यविधेहिस-
ख्यंसख्युःसमक्षंभगवन्नभस्वतः ॥ सुग्रीवर्काशेनविजित्यरावणंसुख्यन्गृहंयास्यसिसीतयासह ॥ ३१ ॥ योवालिनेंद्रत
नयेनगृहान्निरस्तःकीशैश्चतुर्भिरपिमंत्रिवरैःसमेतः ॥ अस्त्यृष्यमूकगिरिमूर्धनिवीर्यशस्तःसूर्यात्मजस्तवसुत्हृद्भविताप्रश

टीप १ पक्षिभक्षकं २ भुजरहितं ३ दोषरहितंभुजहीनं ४ प्रसिद्धस्यप० उध्दकस्य ॥ छ ॥

स्तः ॥ ३२ ॥ मंदवातकृतपंकजकंपांगच्छचर्च्छजलजान्यपिपंपां ॥ देहकांतिजितवार्षिकशंपांतांनयाशुशबरींनिजलोकं ॥
३३ ॥ सत्वाढयोरघुवरमाव्हयन्कबंधःसुग्रीवःस्वसखितयासभाजनीयः ॥ सत्वंनःस्मरसमयेकृतोपकारानित्युत्कानिजभ
वनंजगामदिव्यं ॥ ३४ ॥ यस्यास्तिदिष्टंपरिणामसुंदरंनचापसव्येनभवेच्चराचरं ॥ विज्ञायतेदाशरथेर्यदातुरोदनुःकबंधो
प्यभवच्छुभायतौ ॥ ३५ ॥ अमरींनिषेव्यविभवांशबरींतांधृतनैकमाल्यकबरींविवरीतुं ॥ निजतत्वमस्तमलमीड्यमनी
षोरघुराजसूनुरगमत्सयवीयान् ॥ ३६ ॥ रघुवरमुपयातंविष्टरेसन्निविष्टंभृशमवरजयुक्तंपूजयामाससद्यः ॥ नमसितुमु
पयुक्तैरर्घ्यपाद्यादिभिस्तंशबरयुवतिजन्मानंदयामाससाध्वी ॥ ३७ ॥ शबरिकथयकच्चिद्देशिकास्तोषितास्तेवदतदुदित
योगःपूर्णआचीर्णआस्ते ॥ क्वचिदपिहतिमाप्तानांतरायैःप्रकामंभवसिसुखमयीत्वंकच्चिदित्यन्वयुंक्त ॥ ३८ ॥ सुदिनंदि-
नंसमभवद्यदपृच्छःकुशलंतपःसुतपइत्यपिवेद्मि ॥ गुरवःसुतोषमरमापुरतोमेतिथयोपितृप्तिमुपजग्मुरपीड्यां ॥ ३९ ॥
यदाप्रवृत्तंगुरुभिर्महद्भिःस्वर्गायलोकायसुखायगंतुं ॥ तदोदितंतैरघुराजपुत्रइहागतश्छेत्स्यतिबंधनंते ४० । इतिसुधाधारा



समधुरंमधुरंशबरीरितंवाचः प्रसरंश्रोत्राभ्यांनिपीयकबंधकथितसंबंधंशुल्धमित्थंतवप्रभावमनुभवगोचरमिच्छामीतिरा-
मभाषितमाकर्ण्यमतंगवनादिकंनिर्वर्ण्यभगवन्दृष्टंद्रष्टव्यंश्रुतंश्रोतव्यमितस्त्वदनुज्ञातात्यक्षामिकलेवरमितिव्याव्हतवतीं-
तामपचितोहंगच्छयथाकाममित्युदितांतनूनपात्सात्तनूंविधायतत्सदृशदेहच्छविमच्छाच्छप्रियदर्शनांतत्क्षणंपुण्यंगुरुस-
देशंगतवतींसलक्ष्मणोरामचंद्रोविलोकयामास ॥८॥ तमनुजमवदद्यान्काननेरामचंद्रःकथयकियतिदूरेदीर्घिकास्त्यृष्य
मूकः ॥ निवसतिकिलतत्रप्राणदःकीशनाथःसखिपदमभिषिक्तोदर्शनीयोयतोसौ ॥ ४१ ॥ एवंगभीरंवचनंप्रकुर्वन्सहाय
भूतेनसलक्ष्मणेन ॥ विवेशपंपांनलिनीदलाढ्यांवियोगतापंप्रविहातुकामः ॥ ४२ ॥ इतिश्रीमदभिनवरामायणचंप्वा
मष्टमस्तबकः ॥८॥ छ ॥श्री० ॥ गत्वापिपंपांविरहाधितापतप्तोरघूणांप्रवरस्तदानीं ॥ यत्कामबाणायितनीलकंज-
चूतादिचेतोजगृहेसमस्तं ॥१॥ आपोपितापंशमयंतिनित्यमितिब्रुवेकिंशृणुलक्ष्मणेदं ॥ वातोपियासांनरमागतंस्वंस्छा
नंक्षणात्सौख्ययुतंकरोति ॥ २ ॥ विधौकुटिलतांगतेवसतियत्रशक्तिस्तुयानसाभवतिजन्मिनांशुभफलेतिसन्मेमतं ॥ य

दाप्रभृतिकांतयाविरहितोस्मितत्कालतोनसौतिसुखसंतातिंसुरभिरप्यसौलक्ष्मण ॥ ३ ॥ फुल्लोत्पलाढ्यासुजलाद्यपंपाम
नोहरापक्षिरुतैर्युतापि ॥ तयाविनातद्विपरीततायाइदंसमापन्नमितिब्रवीमि ॥४ ॥ संसज्जंतेलताभिःसुभगविटपिनः प
श्यत्पुष्पिणीभिःकांताभिर्यत्राहित्वानभासिगतिममीपक्षिणोयेयुवानः ॥ चाषाहंसामयूराअपिचमधुलिहः कोकिलाःका
मिनीभिःपुन्नागेराजहंसेमयिभवतिकथंसर्वमेतत्प्रतीपं ॥ ५ ॥ यदिकांतयाविरहितोस्मितयाहितयाभवेद्भविकमेवकुतः ॥
भरतस्यसंगतिरपीहकथंभवितानुजातवदसाधुपथं ॥ ६ ॥ कौसल्यावासुमित्रावनगतिसमयेनिर्दयाकेकयीवानीतासीता
त्वयेतःकथयरघुवरक्वास्तिसासेतिराम ॥ ब्रूयाच्चेल्लक्ष्मणाग्रेकथयकथमसौत्वंकनीयानपीहश्लक्ष्णंतत्कार्यकारिद्भुततरमथ
वाहाहतोस्म्यद्यमंदः ॥ ७ ॥ येभवन्ममकुलेपृथिवीशास्तैस्तथाचरितमेवंवियातैः ॥ स्त्रीकृतंपरिभवंनसहेतप्राकृतोपितादि
हापतितंमे ॥ ८ ॥ भ्रमरकःप्रतियान्सनिवार्यतेऽवनिजयावदनंमृदुपाणिना ॥ वयममीनतथेतितथाविधाविकलयंतिनि
नादवशेनमां ॥ ९ ॥ पद्मानिसर्वाण्यपिहस्तपादमुखेननीतानितिरस्कृतिंयत् ॥ इतीवमामद्यतयाविहीनंकुर्वंतितत्संनिज
दर्शनेन ॥ १० ॥ अब्जानिसर्वाणितुदंतिचेतोभूजानिमित्तंममलक्ष्मणाद्य ॥ तत्सांप्रतंयत्सुहृदोपिभूजाःश्रियोभरेतद्विप
रीतमेतत् ॥ ११ ॥ समाश्रितोहंसुरभिंसमीहाफलप्रदानोद्यतकल्पवृक्षं ॥ तथापिचेतःप्रमदंनयातियायात्कथंतत्प्रमदायु
तस्य ॥ १२ ॥ काकएषविहगःकिलदृष्ट्वामांविरौतिपुरतःश्रवसोर्यत् ॥ दाहकंकटुपटुस्वरयुक्तमैंद्रिजातिरितियोस्तिकृता
र्थः ॥ १३ ॥ म्लायन्मुखंसमवलोक्यशुचंजुषाणात्द्दष्यन्मुखंसपदित्द्दष्टमुखीबभूव ॥ आपन्निवारकवचाःक्वनुकेननीताद्दश्या
नचेद्भवतिद्दश्यतयाऽस्थिरातिर्मे ॥ १४ ॥ कस्यामुखंसमभिलक्ष्यशुचंजहामःकाचास्मदीयमुखमाशुनिरीक्ष्यतिष्ठेत् ॥ वाचा
नवाचमपिमिश्रयितुंसमर्थानैतावतापदमिमांसखिनिस्तरामः ॥ १५ ॥ रामोपभोग्याभवतीहरामाकामाभितृष्यैयदिसा
पिवामा ॥ इयामासतीचित्तहरातथापिभोग्यत्वमस्यामितितद्विमृश्यतां ॥ १६ ॥ दनुःकबंधोपिभवंतमाहयान्स्वर्गमार्गं
सकलंचभावि ॥ सुग्रीवंसख्येनसुखंतवस्यात्धत्वारणेरावणमुत्धतारिं ॥ १७ ॥ शोकेकथंस्यात्तवमंत्रसिध्दिरपिप्रभूताप्रभु
शक्तिरुग्रा ॥ विनानताभिर्भवितार्थसिध्दिःपुंसोपिधर्मेणविहीयसेच ॥ १८ ॥ एवंबहुविलपंतमपरंतमाश्वासयंतंदशरथ

टीप १ सीता २ वृक्षाः ३ वसंतं प० कामधेनुं ॥ छ ॥ ॥ छ ॥

सुतंस्वभावतःस्वरूपतोविषतश्चशूरतरमवलोक्यशून्येरण्येकुतएतयोःप्रसक्तिरित्युल्लुत्यऋष्यमूकपादचरोवानरवरोभीतच रस्तदात्वेशंकितमनावालिप्रणिधीइतिकृतधीः प्रधानेभ्यःसर्वंहार्दंकथयामास ॥ १ ॥ इतरेहनूमंतमंतरेणसर्वेपिप र्वतनिवासिनस्तर्वधिरूढाभंजंभंजंतरुशाखाःकारंकारमारवंहारंहारंमृगमार्जारांश्चारंचारंवनाद्वनंभयतप्ताःपायंपायंकषा- योदकंखादंखादंतृणपर्णानिकांदिशीकाःप्रांजलयःकपिराजेनसंगताबभूवुः ॥ २॥ वीरौधनुर्धरवरौपथिराघवौतौदृष्ट्वाप्लवं- गमपतिःकपिचेष्टितानि ॥ भीतश्चकारहनुमानपिताद्विमृश्यराजन्नतेभयमतोभवितेत्यवोचत् ॥ १९ ॥ सुग्रीवमैवंकुरुचाप लंत्वंयद्राजतातेपितृतोस्त्यवाप्ता ॥ नाद्यापिताभ्यांसहभाषणंतेकुतःपुनस्तद्गतवीर्यदृष्टिः ॥२०॥ एवंत्वदीयंयदिचापलं- स्याज्जानीयुरंजःप्लवगप्रवीराः ॥ राजास्मदीयोबतधैर्यहीनइतीवलोकेप्रथयेयुरेते ॥ २१ ॥ तथाप्रसिद्धौतवकार्यहानि स्त्वामेवनैतेपिसमाश्रयेरन् ॥ अनाश्रितस्त्वंनभवेर्जनेषुपट्टीगतिस्तेभविताकथंवा ॥२२॥ यद्वालिनानिर्जितवीरपालि नावैरंकृतंतद्वदबाहुशालिना ॥ नचेदविश्रंभगतंमनोभवेत्कथंतरामोव्यसनाब्धिमप्लवं ॥ २३ ॥ तदाशुगच्छेद्गृहीतचार



तोराज्ञाप्रवृत्तिःखलुसाधुचारतः ॥ ज्ञेयेतिनीतौकविभिःप्रभाषितंब्रूयाद्यथात्वंयदहंकरोमियत् ॥ २४ ॥ पावमानिरपिरा- जनिदेशादृष्यमूकतटतोयतिवेषः ॥ प्राप्तवान्सपदिरामसदेशंराजकार्यकुशलेषुधुरीणः॥ २५ ॥ प्रेष्यएषजतदृषैयतिवेषः शूरवेषमवलोक्यतदीयं ॥ अप्यभीषणमथोभगवंतावेषभिक्षुरभिवादयतेवां ॥ २६ ॥ सायकांचितकरौधनुर्धरौकौयुवांकि लवनीमगाहतां ॥ देहकांतिततिदर्शितांतरौदेहभिद्यपिचमानसाभिदौ ॥ २७ ॥ युवयोरयंचरमवर्त्मनिगंतापुरतश्चर- स्यमनसोप्यनुगंता ॥ शयनंप्रतीकततिरस्यभवित्रीसमयेपिदर्शनवशादितिजाने ॥ २८ ॥सुग्रीवनामाकपिराजपुत्रःस ख्यंविधातुंयततेभवद्भ्यां ॥ तस्यास्मिदूतःसचिवोहनूमान्नाम्नानकस्मादभिपश्यथोमां ॥२९॥ संलपेहरभसान्मधुवाचाने नसाकमधुनाध्वनिदक्ष ॥ श्रोतुमिच्छतिमनोपिमदीयंशब्दशुत्थमुदितंनितरांसत् ॥ ३०॥ एवंविधायस्यभवंतिदूताःस- दाध्वनीनैरपिवाचिपूताः ॥ नतस्यगेहेधिभुवोस्तिलूतास्तुवंतितंस्तुत्यतयापिसूताः ॥ ३१ ॥ नेच्छावविद्वन्हनुमन्भवंतंक दातिरस्कर्तुमपिप्रवाचं ॥ मृग्यावयंवक्षिपरंगुणाढ्यंसुग्रीवसंज्ञंकपिवीरराजं ॥ ३२ ॥सद्वक्षिभिक्षोयदरूक्षमयततत्करि

टीप १ मार्गेदक्षप० शब्ददक्षशोषांशाइतिगुदं ॥ छ ॥

ष्यावसुखात्तदर्थं ॥ जानीहिवाक्यंपरिणामरम्यमाम्नायतुल्यंकपिराजदूत ॥ ३३ ॥ कालेनदक्षस्तरितुंसमुद्रंकपिप्रवी-
रःसनिशम्यवाक्यं ॥ श्लक्ष्णंसुमित्रातनयस्यमृष्टंमुदाब्धिमध्येनिममज्जपूर्णं ॥ ददेपरिष्वंगमथापितुभ्यंकीशावयोःस्यान्न
यथाभिषंगः ॥ आस्तांमिथोवैरिसमूहभंगोविज्ञायतामेषसुत्द्वत्प्रसंगः।३५॥सखिपदंगमितोयदयंभवेत्कपिवरोपिसरा
ज्यपदंभजेत् । अवरजेनसमंनुगिरौव्रजेदरिभयादपिकीर्तिपदंच्युतः३६ तदनुमतिमंतंहनूमंतमंतःसंजातमुदंतंस्वोदंतंपृ
च्छंतंमधुरंवदंतंविज्ञातव्याकृतिकृतांततयाभगवंतंविवस्वंतमाचार्यतयामानयंतंयज्ञादिनानिर्धूतरजसःप्रजानाथस्याजसु
तस्यदशरथस्यसुतोरामोनामवयसागुणैश्चमत्तोवरीयानपिनमत्तःशत्रुनिरासनेयत्तःसद्वृत्तवित्तोवनितयामयाचसहितोवन
मागतोनुजनस्थानंरावणेनहृतरमणीकोगुणैर्वरेण्यंकारुण्येनदनुकबंधननिर्बंधेनकृतवर्णनंशरण्यंतरणिजंकपीनामग्रण्यंर
णाग्रगण्यंसुग्रीवनामानंशरणमागतइतिलक्ष्मणोविस्पष्टवर्णमाकर्णनीयतयावर्णयत् ।३। राजाकपीनामपितादृशोस्तिस
ख्यंपरिग्राहयितुंचतादृशः ॥ गच्छामसर्वेवयमृष्यमूकंतंद्रष्टुमारात्प्रवचस्यमूकं ॥ ३७॥ यथामुखंसुखंब्रूतेकपिमुख्योह



नूयुतः ॥ सुख्यनूसखिपदंज्ञेयःसुग्रीवाख्यःकपीश्वरः ॥ ३८॥ आरोप्यपृष्ठंपवमानसूनुर्जवेनपित्र्येणतुराजसूनू ॥ नि-
नायकीशाधिपमृष्यमूकेनिघ्नौविचेतुंभवतोनवेति ॥ ३९॥ विज्ञायवृत्तंकपिराड्हनूमतःसख्यावधिःपाणिनिपीडनादिकः ॥
जानेब्रुवंत्वामधुनेतिनायकंरामंभवेन्नेदृशकंविनायकं ॥ ४० ॥ दृश्येतेपथिविषमेपिदेवकल्पौनाल्पार्थावरुणदृशौयतोवि
तल्पौ ॥ तल्पार्थौयदिभवतःस्मनिर्विकल्पौजायेतांममवचनात्कपीशमित्रे ॥ ४१ ॥ प्राभंजनिःसंजनयन्विभावसुंगंधादि
भिस्तंपरिपूजयन्कृती ॥ अस्मारयत्तत्रविवाहपद्धतेःप्रक्रामतोराघवकीशनाथयोः ॥ ४२ ॥ यदृष्यमूकेपवमानपुत्रोरघू
द्वहंतंचकपीश्वरंच ॥ अग्राहयत्तत्रसमिध्यवन्हिसख्यंश्रियंप्रापयिताहुताशः ॥ ४३ ॥ परस्परंतौसुखशब्दवंतौसंजात-
मोदामृतमानसांतौ ॥ दुःखंसुखंनौसममित्युदंतंदृश्यावभूतांस्मपरैर्वदंतौ ॥ ४४॥ यज्ज्यायसेदाद्रघुनायकायशाखांसु-
मृद्वींप्रियंकस्यकीशराट् ॥ यत्साक्षिणोग्नेःपरिचंक्रमोत्तरंदिव्यंनमिथ्येतिनिवेदयन्निव ॥ ४५ ॥ शेषांशत्वात्प्रीतयेलक्ष्म
णायप्रादाच्छाखांचांदनीमांजनेयः ॥ कार्येप्राप्तेमारुतत्वान्नवैरंयोग्यंनावित्येवमेवादृतःसन् ॥ ४६ ॥ वनौकसौदूतपती

टीप १ तल्पंशय्याट्टदारेष्वितिकोशः २ वृक्षविशेषस्य

उभौतुशालेअदातांरघुनायकाभ्यां ॥ देशातिथिभ्यांवचसाकृतिभ्यांयुक्तंहिताभ्यांकृतमित्यवैमः ॥ ४७ ॥ सुग्रीवःप्लवगप
तिःसुतश्चवायोःप्रादातांसपदितितोरघूद्वहाभ्यां ॥ आस्यार्थरुचिरतराकृतेहिशाखेजानीमःकृतमिदमेवतन्मृगत्वात् ॥४८
तदनुवानरवराधीश्वरोनिरतिशयानंदभरभरितऋष्यमूकेस्वपरिवारावृतपरिसरःप्रियकासनगतंरघुवीरंपरेणभ्रात्राबलि-
नप्रवरेणकृतवैरःसदरोल्हतदारइहधरणीधरेचरामीतिसत्वंसत्त्वमवलंब्यमामभयंकरोषिवैभवंतवशांभवंप्रकटीकृत्यप्रत्य
र्थिनंवालिनंहंसियदिकृतार्थतामेभवितेत्यर्थितयाकेवलमवशिष्यतइतिमधुरयागिरासंभाष्यस्वत्हृदयाशयंकृतप्रसारंचका
र ॥ ३ ॥ वालिनोबलिनएषसुत्हृत्तेमार्गणैर्मिहिरभासुरफालैः ॥ नासुत्हृद्भवतिचेद्दरकिंस्विद्दीनदीनइवशूरतरःस्यात् ॥
४९॥ इतिसंदेहनिद्रामवचश्चंद्रमसाकपेः ॥ बोधप्रत्यूषमापन्नासूर्यामोदविधायिनी ॥ ५० ॥ विदेहजायानयनंहिवामं
पुरुफोरसद्यःस्मफलंप्रदातुं ॥ वामंतदात्वेकपियातुनेत्रोस्तद्वामिभिन्नार्थवशेनाभिन्नं ॥५१॥ यद्वक्तुमप्यनुचितंतदिहास्ति
भोग्यंनस्मर्यमप्यतितरांवनितानिमित्तं ॥ स्मार्यमयासत्हृदयेनविरुत्धमेतत्पश्योत्तरीयमधुनोत्तरदानदक्षं ॥ ५२ ॥ तदुत्त

टीप १ शाखामृगत्वाद्वानरत्वात् ॥



रंक्षिप्तमनुत्तरंयत्तदुत्तरीयंपुरतोविलोक्य ॥ सभूषणंभूषितमंगसंगाद्विशिष्यशोकेनपपाततस्याः ॥ ५३ ॥ एकैकमादाय
करेणभूषणंसौमित्रयेज्ञेयतयाव्यदर्शयत् ॥ इदंतदीयंभवितानवेतितत्सचापिमौनंक्षणमभ्यधारयत् ॥ ५४ ॥ नूपुरेअभ-
वतांपुरतोमेपाददर्शनरतस्यनितांतं ॥ तेविलोक्यकथयामिकदाचिन्नेतरद्रघुवराहमितोहि ॥ ५५ ॥ भ्रात्रोर्निशम्यकपि-
राडुदितंतदानींकारुण्यभूरिरुदितंचकपिप्रवीरः ॥ माशोचतंरघुवरोक्षणदाचरंतंकुर्यामहंनखरकृंतनतःपरासुं ॥५६॥क्षणे
क्षणंचेत्क्षणमाशुधत्सेअन्वीक्षणेनापिसमीक्षणेन ॥ सुतीक्ष्णदीप्यच्छरमोक्षणेनभवेद्विपक्षक्षपणंक्षणेन ॥ ५७ ॥ त्वद
यहारिवचःसुहृदस्तदापरिनिशम्यरहःसतुराघवः ॥ दृढनिबद्धशुचंविजहौद्रुतंनचसहायमृतेकिमपिस्थिरं ॥५८॥स्नि
ग्धेनरूक्षोभवतिप्रकामंस्निग्धोनरूक्षेणभवेत्तुरूक्षः ॥ ग्रामीणतायत्रभवेत्थितेनवन्योपिसंरक्ष्यतयाविधेयः ॥ ५९ ॥
तदनुसमानशाखाधिष्ठितंशब्दप्रणयनकुशलाभ्यांलक्ष्मणहनूमद्भ्यांसहितंरघुराजकुमारंसर्वज्ञंरामचंद्रंशाखामृगाधीश्वरः
स्वकर्मसूत्रंवालिनिहतमायाविदुंदुभिवृत्तव्याख्यानसहितंदर्शयन्गूढतरंवाल्यपशाब्दितदोषनिरासेनशुचीकर्तुंस्वाभिप्रायं

निवेदयामास ॥४॥ त्वत्कृत्यसूत्रस्छितवालिदोषनिरासनंप्रोद्यतमार्गणेन ॥ स्वीयेनकुर्यांमपितेनचत्वांलोकेत्रसिद्धिंसत
तंनयेयं ॥ ततोभंग्यंतरेणवालिवधंसूचयनूतेनैवतत्रकृतप्रतिज्ञांमित्रीभूतममित्रनाशनंसुमित्रातनयेनस्छितंरामचंद्रमस्ति
निरस्ताशंकमृष्यमूकस्छितौकिंचित्कारणंतदपिश्रवणरमणीयंश्रवणीयंमहिषंपरासुंकृत्वातद्देहंमतंगाश्रमेक्षिपतावालि-
नातदाश्रमाशुचीकरणेनात्रतदप्रवेशरूपःशापआसादितइतितदत्रशुष्कमपिपतितमुत्क्षेप्तुमनर्हंवैरिणापरेणपरमपिसा-
लान्सप्तनिष्पत्रयितुमेकएवघटतेतस्यकियंतिकृत्यानिवर्णयितुंशक्यानीतिभावंवीर्यंचबुभुत्सुरेवमुवाच ॥६०॥ शुष्कस्यभा
रोदशभागहीनआर्द्रादितिव्यंजयितुंसरामः ॥ कंकालकंतस्यपदाग्रकोट्यानिनायसद्योदशयोजनांते ॥ ६१ ॥ रामस्य-
तालानपिसप्तभित्वागत्वापिपातालतलंशरःसः ॥ मुहूर्तमात्रेणनिषंगमध्यंविवेशकीशाधिभुवस्तुपश्यतः ॥ ६२ ॥ शर-
योजनभिन्नतालसालंरघुबालंसमवेक्ष्यशत्रुकालं ॥ त्वदिसंशयजातमुग्रजालंनिरमुंचत्प्लवगाधिपःशुचालं ॥ ६३ ॥ प्लव-
गाधिपःसपदिराघवाज्ञयानिजबंधुगंधिनमवापनिहंतुं । क्रमशोबभूवतुरुभावपिदक्षौसदृशौनियुत्धकरणायसमंतात् ६४ 

तावुभौतरुमृगाधिपपुत्रौजित्वरौयुयुधतूरभसेन ॥ स्वाश्रयाअपियथानवशिष्टाःस्युस्तथाविपिनसीमनिकृत्वा ६५॥ अमि
त्रहंताभुविरामभद्रउदीक्ष्यमित्रंतदमित्रतुल्यं ॥ अमित्रमप्येषतथाविधंसमोकुंशरंनैच्छदतीवभीरुः ॥ ६६ ॥ पराजयः
स्यादधुनाममाजावितिप्लवंगाधिपतिर्जवेन ॥ त्रातारमप्राप्यसकांदिशीकस्तमृष्यमूकंगतवान्पदातिः ॥ ६७ ॥ अनुद्रुतो
रामउदीक्ष्यकष्टंद्रष्टुंकपिप्रेष्ठमुवाचमृष्टं ॥ निष्टप्तमप्येतदहोसुवर्णमलंकृतौवष्मभवेत्त्वदीयं ॥ ६८ ॥ जल्पाकतामप्यपि
जाल्मतांवानात्यल्पसंस्छांसमवापतस्मात् ॥ अवैरिणंत्वामधुनाप्यवैरिणंकीशेशयन्नाकरवंक्षमस्व ६९ तदाबध्यतांगजपु
ष्पीवध्यतांचशत्रुर्याचपुष्यतिश्रियंकृषतिद्रष्टृनयनंयावन्नशुष्यतिप्रधृष्यसेनमद्वचसासमेष्यसियशसानकरोमिप्रशंसामा-
शंसामिसदैवतवजयंमाभैषीःशपामियोषामपिकनीयसामारोषंगमिष्यसिभविष्यसिसुखीतिरामेणोक्तोलक्ष्मणेनकंठकृत
मालःकपीशोविभ्राजमानोवपुषातालतमालावलींनिकषारामलक्ष्मणाभ्यांतारादिभिर्वीरवरैःकिष्किंधांपुनरप्याजगामद्
तदनुरामवचसिकृतश्रद्धःकोपानुविद्धःसमुन्नद्धबृहदुद्धवोयुद्धायबद्धपरिकरतयासन्नद्धआराद्धोषणधामचरणःकीशा

धीशः सुग्रीवऊर्ध्वग्रीवोऽध्वमाश्रयंतंवालिनंमध्येमार्गेसरुदिततारोदितांगदविज्ञातरामोदंतविघ्नमपिस्वनिघ्नंतारस्वरे-
णाह्वयंस्तेनसहयथाप्राणंनियुध्यहीनप्राणोविगतप्राणंविधातुंराघवायनिदर्शयामास ॥ ७॥ आर्तत्राणपरायणोरघुवरः
सुग्रीवमातँहशासाक्षात्कृत्यशरंवरंझटितिसच्चापेविधायक्षणात् ॥ ऐंद्रेणप्रमदेनसाकमपितंकीशंक्षणेनाप्यसौमुत्काापात-
यदग्रतःकपिवरंऽयत्यस्तवस्त्रादिकं ॥ ७० ॥ एतस्ययोवाक्षिगतोभवेन्नासतेनजय्योभवतीतियोगात् ॥ रामेणनाप्यक्षिग
तेनभूत्वावालीहतस्ताद्दशिसंप्रहारे ॥ ७१ ॥ ततःसवालीपतितोरणाग्र्योददर्शरामंधृतकार्मुकाग्र्यं ॥ क्षिप्त्वाशरंसोपि
ससर्पतस्यदृष्टयोःपुरस्ताद्गतभीःससूनुः ॥ ७२ ॥ असूचयित्वायदहन्निरागसंरामत्वमस्मिन्विमलेकुलेरघोः ॥ जातोसि
सभ्यैःसहचेत्समागतोममाहवोत्थंकिमुवक्षिचोत्तरं ॥ ७३ ॥ यदित्वदीयंबतकार्यमास्तेतदर्थमेनोऽयदधास्त्वमीदृशं ॥ त्वं
चेदवक्ष्योन्यहनिष्यदेषरक्षोप्यनेष्यज्जनकात्मजांतां ॥ ७४ ॥ वक्तुमप्यनुचितंहिविधत्तेराजभीतिमपहायशरीरी ॥ कर्म
सन्नृपतिकर्णगतंसत्प्राणहानिकरणायभवेत्तत् ॥ ७५ ॥ धिक्कृत्यराजानमपिब्रवीतिवध्योजनस्तत्रनचिंत्यतेतैः ॥ स्नुषां-

स्वकीयामिवयोभुनक्षिकनीयसोभ्रातुरपिस्त्रियंत्वं ॥७६॥ पशुपक्षिमृगादिजीवजातंभरतस्यास्तिसमस्तमप्यधीनं ॥ अ
नुशिष्टसरूपमस्तिवानेत्यनुविज्ञातुमिहापिसंचरामः ॥ ७७ ॥ अनुग्रहोयंत्वयिकीशनाथभवेत्कृपालोर्भरतस्यराज्ञः ॥ अ
स्मान्पुरस्कृत्यवधंऽयधात्तपापस्यतेनत्रिदिवंभजेथाः ॥ ७८ ॥ ब्रूयान्नचाहंतवसंन्निधानेकृतंकृतंयन्नभवेत्कृतंतत् ॥ ममांग
जस्तेनुजवत्प्रपाल्यइत्यस्तिमेरामदृढार्थनेयं ॥ ७९ ॥ वालीहतोरामशरेणनूनमितिप्रभूतंतुनिशम्यशब्दं ॥ अंतःपुराच्चंच
लतारहाराताराविनिर्गत्यययौस्वकांतं ॥८०॥ क्षुद्रयानिद्रयायुक्तंनजहातिस्मयापतिं ॥ तंदीर्घयाकथंसद्योगृहीतंसापरि
त्यजेत् ॥८१॥ दिवानिशंव्योमचरेणभूत्वाभ्रांतंजगत्सर्वमपित्वयायत् ॥ ताराधिपत्वान्नचचित्रमास्तेचित्रंत्वयायत्पति
तंधरण्यां ॥८२॥ यदब्रवीस्तंममचास्यातिप्रियात्वत्तःक्षितिर्मैमनसेनरोचते ॥ गुहामपित्वत्कृतआश्रितोभवंसमस्तमेतत्क्षि
तिवासतोगतं ॥८३॥ उक्तोपिसद्मप्रविहायनिर्गमेसंस्मार्यविस्पष्टतयांगदेरितं ॥ प्रियंहिपुत्रंप्रियपुत्रनत्यजेःक्रुष्टोसिका
लेनकथंनिवार्यसे ॥ ८४ ॥ आस्तामिदंमांप्रविहायययातालोकांतरंतत्रधवोपभोक्ष्यसि ॥ मत्तोधिकाःपुत्रवतांधुरीणनचांग

दंतत्रदृशापिपश्यसि ॥ ८५ ॥ परिष्वजेथाःप्रियपुत्रमंगदमंकेसमास्छायशिरःसुखेन ॥ घ्रातंकुरुष्वाथपुनर्नलभ्यमेह्यंग
दत्वंव्रणमाशुतातं ॥ ८६ ॥ रुमेसकामाभवचारुवेषासुग्रीवदेवस्त्वमपीहराज्यं ॥ निष्कंटकंभुंक्ष्वसुखेननूनंयेशिक्षितास्ते
पिसुखंचरंतु ॥८७॥ धृतांगदंत्वंप्रियपुत्रमंगदंतारेपुरस्कृत्यसुखेनपैतृकं ॥ संस्छापितंपश्यसिकीशराज्यकेततःपरंशां
तिमुपैष्यसीतिच ॥ ८८ ॥ निशामयत्वंहनुमन्मदीयंशतंसुतानामपिजीवतांसतां ॥ सुखप्रदंतन्नभवेद्यथेदंपत्युर्मृतस्या
पिसतःशरीरं ॥ ८९ ॥ तारांजनेयसंवादाद्रामबाणाधिकंतदा ॥ अरुंतुदात्सवीरोपिवालीदीनतरोभवत् ॥९०॥ सुग्री-
वमालांक्रमतोमदीयांगृहाणकुल्येनसहांगदेन ॥ जहातुनश्रीःसुखिनंभवंतंविस्मृत्यसर्वापकृतंमदीयं ॥ ९१ ॥ पुत्रां-
गदत्वंसमवर्तिभावंगतायदिस्याअनुजेनसाकं ॥ इदंहिविज्ञेयतयावधेहिक्रियानुरूपंफलमस्नुतेनरः ॥९२॥ इत्यंगदंस
मनुशास्यतदैववालीदेहंविसृज्यरघुराजशरोपसृष्टं । शस्त्राहताःसपदियांगतिमाप्नुवंतितांरामदर्शनवशादधिकांकपीशः
॥९३॥यादायिकंठादवतार्यमालाभ्रात्रेनिजायप्लवगेश्वरेण । युक्तंकृतंतेनतदामनीषिणासुग्रीवतांतस्यविचिंत्यवित्तां ।९४॥



याकीशवर्येणगलेलसंतीमालार्पितातत्समयेनुजाय ॥ सांगीकृतातेनजयाख्यलक्ष्म्याःकःकांचनींहास्यतिवाप्ततौयः ॥९५
यादृग्भवेत्पर्वजनुःकृताक्रियातथैवतावत्फलमाप्नुयान्नरः ॥ कुतःसवालीवरवर्णिनींसदानकांचनीमासुगतेर्जहौयतः ॥९६॥
रामवालिवधपाप्मनिमंत्रंनिग्रहेणविततंकृतवंतं ॥ यद्ववारनभवानपिमांतद्दृश्यसेरिपुरिवाद्यसुहृत्त्वं ॥ ९७ ॥ जहिराम
मामपिभृशंनिहतांयदितेघृणास्तिवनिताहनने ॥ नचदोषभागसिनरस्यवधूःश्रुतिराहचार्धमहमस्मिसच ॥ ९८ ॥ तारा
ब्रवीद्दाशरथिंतदानींविलप्यकांतंरणसंस्छितंतं ॥ कथंममाभूर्व्यसनप्रदायीभवन्नपित्वंभुविरामचंद्रः ॥ ९९ ॥ कांतेनही
नाविधिनाकृताहंकुतोब्रुवंत्वांविवशापिराम ॥ तारोभिपातःकृतएवपूर्वंसुग्रीवविश्वासकृतेत्वयासत् ॥ १००॥कारणेनहि
विनाममकांतोमार्गणेननिहतोभुविशेते ॥ मांतथैवजहिराघववीरताटकांहतवतोनतवन्हीः ॥ १॥ महिषंपातयामासवाली
परमकोपनः ॥ त्वंपुनस्तस्यमहिषावाराःकिंकिंनकुर्वते॥ २ ॥ तारांविशेषचपलायतनेत्रतारांहारामकिंकृतमितिब्रुवतींनि
रीक्ष्य ॥ तारेविमृश्यभवशोकसमुद्रपारेदीर्घायुरेषतनयःपदमाप्नुयात्ते ॥३ ॥कापियंवशगंसुतस्यतवतत्पेयंवचस्तेभवेज्झे

टीप १ हरिद्रां २ रलयोरभेदः ॥ छ ॥

याशिष्टजनस्यपद्धतिरित्तोनेयंचशिष्टंवयः ॥ ध्येयंतच्चरणद्वयंहिसततंगेयंमदीयंयशस्सेयंवाङ्नमृषाभवेद्यदिततःक्रेयंसती
नांयशः ॥ ४॥ सुग्रीवयत्त्वंगिरिमूर्ध्निमावदोहंतव्यएवैषकथंविधायच ॥ वालीतितत्किंलघुवीरमास्मतेस्मृतिंगतंयद्विपरी
तमाहभोः ॥ ५ ॥ शेषेणशेषोविधिरप्यशेषोविधेयइत्येवहिशिष्टसंमतिः ॥ क्रमागतंराज्यमथाप्यवाप्नुहिविधेहिसद्योयुव
राजमंगदं ॥ ६ ॥ सर्वमाज्ञानुरूपंतमंगदप्रमुखास्तदा ॥ चक्रुःकपीश्वरोरामःसचराज्यंगुहास्थितिं ॥ ७ ॥ आपन्नास्त्वि-
त्येवमाश्चर्यमास्तामापन्नश्चेन्मत्कृतेकाननेस्मिन् ॥ यत्त्वंभ्रातर्लक्ष्मणोविश्रुतःसन्नैवंभूतंनैवभाव्यस्तिवापि ॥ ८ ॥ चतु
र्षुमासेपुभवेहसौकाःशोकंपरित्यज्यसुखेनराम ॥ नाकंगतंजातविकर्मपाकंपुलस्त्यपाकंकुरुसैन्ययुक्तं ॥ एषत्यक्तोमया
शोकस्तववाक्यामृताश्रयात् ॥ गिरिंप्रस्त्रवणंशांतोनिशांतंकल्पयाम्यहं ॥१०॥ शूरंपुरस्कृत्यनभोमलिम्लुचोविसारिस-
र्वंवसुलोप्त्रंतांनयन् ॥ कालेनराज्ञाचपलाकशाहतोजहातिकीलालमथोघनारवान् ॥ बलेनयस्याधिगतेनराज्यंसंभुज्यते
कीशवराद्यतस्यहि ॥ कार्येयतस्वांजनमांजनेयश्चकारवाचंश्रुतिनेत्रयोरिति ॥ १२ ॥ विमृश्यवर्षाशरदोःप्रवृत्तिंप्राभंजने



रप्युदितेनसाकं ॥ सदानुकूलेनसमादिदेशसर्वाभिसारायकपिःसनीलं ॥ १३॥ मन्वेकरात्रात्परतोमदीयंयःपादमूलंस
मुपैतुमिच्छेत् ॥ सतत्तृतीयांशगधर्ममीयादितिब्रुवन्सप्रययौकपीशः ॥ १४॥ तदन्वतीतांशरदंसमीक्ष्यकामंनिकामंशरदंच
रामः ॥ कीशेनसाकंप्रतिकूलगामिजडंविभाव्यानुजमभ्यवोचत् ॥ १५ ॥ द्यौर्दुर्दिनंप्राप्यनिगूहमानाशरद्यथोवासकस-
ज्जिकोपमा ॥ सूर्यादिभूषापरिभूषिताहिकांतंप्रयाताब्जमुखीविभासते ॥ १६ ॥ जातंनायनमद्यवालिनइतीवोद्बुध्यकीशे-
श्वरव्यध्वंनायनमूररीकुरुतथाचान्यद्भवेच्छायनं ॥ भव्यंनायनमप्यभूत्सतुगतोवालीस्मयेनाग्रतोयद्यन्नायनमस्तितेपर-
मतःपूर्वोक्तमेवाचर ॥ १७ ॥ मद्वचःश्रुतिसमंनमानयेत्तांस्मृतिंगमयितास्मितंप्रति ॥ तस्यवर्ष्मचपुराणतांनयेसेतिहास
मपिवासमाप्नुयात् ॥१८॥ जहीहिशोकंकिलपापसंभवंमारीचमायाहरिणेनपाप्मना ॥ त्यागात्स्वहस्तेनशरस्यतत्कृते
यद्रौरवंत्याजितवान्नचासिकिं ॥ १९ ॥ वक्तव्यभागेकिलकोपितंत्वांनाचार्यइत्येववदेन्नतस्मात् ॥ संबोधयेस्त्वंमृदुभिर्व
चोभिःसुहृत्कपीशोत्द्दयीबतासौ ॥ २० ॥ रामीयवाक्यंत्द्दयेप्रकुर्वन्मध्येपथंवृक्षगणान्विकुर्वन् ॥ विग्लापयन्दर्शनतः

प्लवंगान्द्वारेविलोक्यांगदमित्युवाच ॥ २१ ॥ स्वेनैवकृत्वासमयंविशिष्टंभिनत्तियोरागवशेनमर्त्यः ॥ नतेनदृश्यायमजो-
प्यमर्त्योनतेनवाश्रावयतेपितव्यं ॥ २२ ॥ तज्जागरेहूतिरभूदपट्वीकृतांगदेनश्रवसोस्तुपट्वी ॥ संहूतिरुच्चैःकपिभिःसम
स्तैर्निद्रांसपत्नीमिवधिक्चकार ॥ २३ ॥ यंक्षेणगच्छन्नथसप्रभावोद्वितीयतामाश्वपिसप्रभावं ॥ स्वीयेनभावेनसमंप्रभा
वंसौमित्रिणाप्रोक्तमुवाचतस्मै ॥ २४॥ तदनुराघवस्यकिमस्तिकोपकारणमितिकृतानुयोगोहनूमताविवृततन्निदानःप्लव
गपतिःसिंजिनीस्वनेनविज्ञातलक्ष्मणागमनस्तारेकिमस्यत्वदयेभवतिकिमर्थमयमिमंसंभ्रममाप्तोरेचयांतर्गतंविरचयतथा
विधांवचनरचनांयथामार्दवंगच्छेदितिव्यात्वत्यापत्वतसर्वेंद्रियप्रसरःकूर्मइवासनेनिभतमतिष्ठत् ॥ पतिहिततत्परासा-
ताराापिसन्निहितप्रतीहारतलाअतारेणसांत्वपरेणव्याहारेणोत्तरकोसलाधीश्वरतनयंरंजयंतीपदेपदेउत्तरेणजयंतीआनंद
सागरेतदंतःकरणंनिमज्जयंतीत्वदभिप्रायाविज्ञानात्पर्वमेवदशभ्योदिग्भ्यआगतान्वानरान्सूचयंतीशांतमानसंलक्ष्मणं
विदधतीसुग्रीवाभ्यर्णमानीयतत्कृतप्रार्थनासूचनामधुरेणवचसावक्तुमारभत ॥ ९ ॥ अस्मत्प्रसादात्पुरतस्तवेहग्बिभीषणं-

टीप १ तन्नामकौअमात्यौ ॥ छ ॥





रूपमभूद्रघूत्तम ॥ तदातदेतद्गुरुचेनचेतश्चेतःकृतद्वापारमात्रदुर्ग्रहात् ॥ २३ ॥ कोपएषहिकरोत्युपतापंदेवरार्यविदधा-
त्यपिशापं ॥ वस्तुतत्वमपिबोध्धुमशक्यंयेनतंपरिहराशुसमस्तं ॥ २४ ॥ कांतेपदंतवदधातिदधातुकामःकांतेकपीशसुत्द
दःकथमेषरामः ॥ शांतेकरोतुवदबुध्धिरितीहकांतेकांतस्यतांस्पृशतित्रागतिमुत्तमांते ॥२५॥ एवंनिष्ठुरतरंव्याहरंतंपुरतःस
मापतंतंवीरतयासमाश्वासयंतीमपितारांतरलतरतारयांतप्रणयपरयादृशानिघ्नंतंनिघ्नंतमप्यमित्रघ्नंनागस्विनमपिपाद-
योःप्रणिपतंतमप्यनवलोकयंतंरुमाप्रभृतयःसुग्रीववामाःशनैःशनैःसमाश्वासयितुंप्रवृत्ताअपिकृताकल्पाविगतविकल्पा-
अकल्पाबभूवुः ॥ विज्ञातवानसित्वदावनचारदक्षौरुक्षाविमौसपदिकक्षसमावितीव ॥ दारात्वतावपिमयापियतःसप-
क्षौतारांरुमामपिनभोक्ष्यसिवक्ष्यसेत्वं ॥ २६॥ वालीगतोभवदितःकपिमुख्यनाध्वासंकोचमेषसमवापततोदुरध्वः॥ ना
सौस्वकीयजनदत्तसमीक्षणस्तुदृष्टोमहापथसमाचितइत्यवेहि ॥ २७॥ सर्वंसहावसुमतीपतिपुत्रयस्त्वंशांतोभवन्यदिहि
पश्यसिलक्ष्मणाद्य ॥ छेकाइमेतरुमृगाइतिकिंविचित्रंच्छेकीकृतत्रिभुवनस्यतवापिनित्यं॥ २८॥ येस्युःशरेणनिहताभु

टीप १ निरुद्योगेकांतेपत्यौ ॥ तेउत्तमाबुध्धिरंततेस्यकांतस्यकांबागातिंस्पृशसीतितांवद ॥ छ ॥

विशेरतेतेनैतद्विचित्रमितिलक्ष्मणवीरपश्य ॥ वाचाशरेणनिहतोवनिताजनोयंसंसिध्यितोमृदुरिमंत्यजतीवलोकं ॥ वीरः
शरेणनिहतोपिनचाश्रुपूरंसंग्रामसीमनिकरोत्यपिनास्त्यवित्तं ॥ वाचाशरेणनिहताःसदनेस्वकीयेसंत्याजयंतिवनिताश्चप-
रित्यजंति ॥ ३० ॥ ततस्ताराळपितेनहारायितत्हृदयंवरभूषणैरिवशोभमानंमानधनंधनंजयतेजसमपिकांत्याचंद्रमसं-
रघुराजसुतस्यरामस्यकनीयासंवचसिविक्रमेचंक्रमेचवरीयांसंबृहदंसंशेषांशंप्रतिकृतालिंगनः प्रहसितंविदधानोंगीकृतस
मुत्पतनगृहीतगगनांगनोविरहितसंजातसंमदभरपारावारपारावारोवानरराजःसमीरकिशोरंतत्रतत्रकृतस्कंधावारान्सप
रिवारान्वानरवरान्बहुवारकृतसमरसंचारान्विहितसमुदाचारान्यानपिकृतप्रचारान्मन्यसेतान्परानपिविहितसंन्नाहानूवि
धेहीतिशृण्वतिसुमित्रातनयेमधुरेणतारतरेणपदव्याहारेणसबहुमानंसंदिदेश ॥ तदनंतरमागतवानरशतानीतगृहीतना
नाविधफलमूलाद्युपायनोलक्ष्मणेनसमानयानःकाननचरवानरवराधीश्वरःसुग्रीवोरामपादमूलमुपागतस्तेनपरिष्वक्तःकु
शलंपृष्टःसंस्तुतःसंप्राप्तकार्यैकृतप्रश्नःपावकादिसुतान्सेनानायकान्स्वामिकार्यचर्यासमाप्तिप्रापकानूकाननिकायानूक्र-



मेणनामपुरःसरंरामायनिवेदयामास ॥ तेचसर्वदानादृतदैन्याःस्वस्वसेनाधन्याःपंडितंमन्याःसैन्यावन्यान्युपादायफला-
निवीरमूर्द्धन्याअपिवानरवरेण्याधरण्यांकृतपाणयस्तावुभौशिरोभिःप्रणेमुः॥ आनीयसैन्यंकपिराजसूनुर्निवेद्यरामायभृशं
कृतार्थः ॥ पप्रच्छभूयःकरवाणिकंतेकामंसुहृद्दर्यवदाधुनात्वं ॥ ३१ ॥ प्राणेश्वरीरहितमात्मसुखंकपीशविज्ञाययद्भवति
कृत्यतमंकुरुष्व ॥ तच्चेत्करोषिहितमाशुनिरस्यमित्ररेफंद्वितीयपदगंतुसमादिशत्वं ॥ ३२ ॥ ततश्चतुर्दिक्षुसवानरेंद्रः
प्रस्थाप्यसीतांविचितांविधातुं॥ स्तुत्वाहनूमंतमुदारसत्वंप्रदापयामाससचांगुलीयं ॥३३॥ मासावधेर्येतुविशोध्यसीतांस्व
भर्तृपन्मूलमुपागतास्युः ॥ मयासमानाविभवेनतेपिभवेयुरत्यंतकृतोपकाराः ॥ ३४॥ अतोन्यथाचेद्भवितातदातेसंरुग्यांग
ताभूतगतांभवेयुः ॥ इतीहसंचिंत्यकपिप्रवीराष्टीकध्वमास्तांभवतांप्रमोदः ॥ ३५ ॥ ततःप्रधानानपियातुधानान्हनामनि
धीर्यतयापुरोगाः ॥ इहेतिसंकेतकृतःप्लवंगाःपादैरजः संजनयांबभूवुः ॥ ३६ ॥ सुग्रीवयत्तेविदितंभुवस्तलंतेनास्मिचित्री
कृतमानसांबुजः ॥ प्रष्टुंभवंतंप्रतिकिंत्वथायतेपुत्रीजगच्चक्षुरितिस्मयेनते ॥३७॥ कृत्याप्युदग्रंमहिषंनिहंतुमुद्यंतमेवानुग

टीप १ प्राणेश्वरीरहितमित्यत्रद्वितीयपदगरेफंविनायत्करोषितत्कुरु ॥ छ ॥

तंविरुध्दं ॥ मत्वावरीयानपितादृशंमामभिषेषकर्तुंविदितंतदानीं ॥ ३८ ॥ मतंगशापेनहिवालिगत्याकृतास्तिहीनेतिसमी
रसूनुना ॥ तदृष्यमूकस्यगुहानिरुक्तामयापिवासायकृतारघूद्वह ॥ ३९ ॥ यदायदासंकटकालवेत्तातदाभवत्येषचतस्यभे
त्ता ॥ समीरसूनुःसतुमार्गमाणःसीतांयतस्तेनतवेष्टसिध्दिः ॥ ४० ॥ ततस्तेसर्वेपिखर्वेतरशक्तिमंतस्तत्रजिनयोनयःपर्व
तादिषुविचिंत्यसीतांनाधिजग्मुःपरंसुग्रीवमुपसंगम्यमासावधिमधिजग्मुः ॥ गताविचेतुंजनकाजातांबिलंप्रविष्टाहनुमत्पु
रस्कृताः ॥ नचासतस्मात्प्रतिभाकपीनांस्वयंप्रभादक्षतराविनिष्क्रमे ॥ ४१ ॥ शाखामृगाणांजनकात्मजातामृक्षाधिराजे
नसमंविचिन्वतां ॥ नासादिताकेनचतत्प्रवृत्तिस्ततोंगदोभूदतिखिन्नमानसः ॥ ४२ ॥ प्रायोनचार्योभविताकपीनांमृग्यंन
तल्लब्धवतांयतोहि ॥ राजातितीक्ष्णोवधिरप्यतीतःप्रायोभवेन्नःशरणंत्विदानीं ॥ ४३ ॥ निशम्यतीक्ष्णंवचनंहनूमांस्तारा
दिमान्यंसतदांगदस्यतत् ॥ सुग्रीवराज्यंगतमेवचित्तेविचिंत्यतस्याभिमतंनिरस्तवान् ॥ ४४ ॥ पुनरपितदेववरमितिकृत
निश्चयोरामचरितंव्याकुर्वन्नंगदोगृध्रराजेनसंपातिना।कोयंममानुजस्यकथांकथयतिकथनीयस्यकथयेत्युक्तोगिरिशृंगादुत्ती



र्णस्तस्मैसीताशुध्दयेस्वागमनपर्यंतंसर्वंकथयामास ॥ तदनुसर्वेकपयःकथितबाल्यवृत्तंगृध्रराजंसकरुणंतानवलोक्यवृध्द-
भावेनसन्निरुध्दोपिरामसाहाय्यंकरिष्येमाखिध्वंदृशापश्यामिलंकायामशोकवन्यांरावणेनस्थापितांजनकराजतनयांतन्न-
यतभवत्सपक्षमपिविपक्षंमामनुजस्योदकदानायसमुद्रतीरंमृगयतलवणसमुद्रांभस्तरीतुमुपायमित्युक्तवंतंशनैःशनैःसमु
द्रतीरमभ्यनैषुः ॥ कृत्वोदकंतत्रसमुद्रतीरेकनीयसेहेतुपुरःसरंतदा ॥ प्लवंगमानांसदसेशशंसतन्मैथिलीज्ञाननिदानमा-
दितः ॥ ५७ ॥ योनित्यमंगीकृततारकोकिर्निशाकरोह्यासमुनिर्घृणीडयः ॥ स्वभावसंशामितपादमूलसंप्राप्तलोकोग्रस
मस्ततापः ॥ ५८ ॥ सहोदरावुत्पतनप्रसंगेसूर्यंगतौस्वस्तदनुप्रतापात् ॥ तस्यास्मिसंदग्धतनूरुहःसन्विंध्यस्यगर्तेन्यप
तंतदानीं ॥ ५९ ॥ पक्षच्छायनिवारितातपतयाऽसर्वांगसंतापनात्पूर्णांगैःसपतन्जटायुरपिसंप्रापानुगोदावरि ॥ वृक्षे-
सौकृतनीडआसपरतःकिंजातमासीददोनाश्राव्यद्यभवन्मुखान्मृतइतिश्रोतुंसमर्थोभवं ॥ ६० ॥ दयालुर्यःसमुनीश्वरो
मांविपक्षमप्याशुविलोक्यपक्षिन् ॥ सीताविचेत्रेकपिसंचयायविख्यायभूयाहिततःसपक्षः ॥ ६१ ॥ ब्रवीतियावच्च

रितंकपिभ्योभूत्वासपक्षोनभसिप्रवेगात् ॥ चरन्सगृध्रोवददस्तुभव्यंविदेहजांप्राप्स्यतमार्गणेन ॥६२॥ ततस्तुसंपाति
वचोमृतोत्धतागिरेःप्रपाताद्रभसात्समुत्ता ॥ यद्वाहिनीसापृथुरोमसंयुतासमुद्रमापेतिविचित्रमत्रकिं ॥६३ ॥ विनापि
सेतुंप्रतियातुमीशोलंकांभवेत्कःकपिसंघनिष्ठः ॥ इत्यंगदंवाङ्मिनमृक्षराजःप्राभंजनिःपेशलइत्युवाच ॥६४॥ तदन्वनं
बूकृतंवदताजांबवताकेसरिणोमनोरंजनायामंजनायांप्रभंजनान्निजांजनप्रतीतामुत्पत्तिंश्रावितःस्वविक्रमंस्मारितोहनूमा-
नपिविवेकवतःकपिप्रवेकाननीकसंस्छानेनैकैरमृतासारसमानैर्वाचःप्रसारैर्द्रविणसंचयैःसभिकानिवकामिनीविलासैरभी
कानिवत्हृदयानंदजननैःप्रोत्साह्यतरीतुंज्ञातियायप्राणान्वितरीतुमानंदभरमिवपर्वताग्रमारूढोबभूव ॥ प्रणंतुमंजःसहल
क्ष्मणेनरामंहनूमान्मनसाजगाम ॥ नकेवलंराक्षसराजधानींद्रष्टुंचसीतामपिरामपत्नीं ॥ ६५ ॥ मात्रेंजनायैपवनायपित्रे
येनास्म्यधीतीफणिबद्धशास्त्रे ॥ तस्मैमदीयानिनमांसिसंतुभूयासुरप्यत्रसुखायतानि ॥ १६६ ॥ इतिचंपूकाव्येनवमः
स्तबकः ॥ छ ॥ यदस्त्यदृश्यंसमुपैतिदृश्यतांगाढंचयेनस्मतमोनिरस्यते ॥ महोजगच्चक्षुरदोविदेहजांद्रष्टुंसहायंभवता-

टीप १ सेना प०नदी ॥ छ ॥



न्नमामितत् ॥ १ ॥ मयांबरंयेनसदाविलंघ्यतेकिमंबरंतत्रभुवोमदग्रतः ॥ कुतोबिभीयामपितद्विलंघितुंयतःसमुद्रोप्यह
मस्मितादृशः ॥२॥समुत्पतंतंहनुमंतमारादब्धिंनसूर्यःप्रततापतीक्ष्णं ॥मंदंसिषेवेपिजडःसमीरोवंश्यत्वबुध्धिर्यदिहास्ति
हेतुः ॥३॥ रामीयकार्योद्यतमांजनेयंपंचापिभूतानिसहायतांययुः ॥ सूर्यःसमीरोंबुनिधिर्धरेशोव्योमापिगत्याउपकार-
कारिणः ॥ ४ ॥ धरंश्रितायद्यपिभोक्तुमंगनाविद्याधराःपावनिमुत्प्लवोद्यतं ॥ प्लवंगमंवीक्ष्यविहायसुंदरंभोग्यंतदाव्योम
चरत्वमाश्रिताः ॥ ५ ॥ इक्ष्वाकुवंश्येनविवर्धितोहंतद्वंश्यकार्येप्रसृतेसहायः ॥ नस्यांकृतघ्नोभवितास्मितेमेत्यतःसमैनाक
मुवाचसिंधुः ॥ ६ ॥ मैनाकदैतेयपथस्यरोधेशक्रेणनित्यंविनियोजितोसि ॥ रक्षःकुलध्वंसनसंप्रवृत्तंधरेंद्रविश्रामयरामदू
तं ॥ ७ धराधरेंद्रोपितदाविधायबहिर्जलात्कांचनशृंगसंघं ॥ अत्युच्छ्रितःकीशवरेणवेगाद्धत्साहतःसन्निपपातत्दृष्टः ॥ ८
रचितंहनुमंस्त्वयायदेतत्तदिदंकर्मसुदुष्करंपरैः ॥ क्षणमत्रनिधेहिपादयुग्मंसुखितोयास्यसिकार्यसिध्ध्यै ॥ ९ ॥ इत्युक्त
वंतंधरणीधरेंद्रमालभ्यहस्तेनहिरण्यनाभं ॥ जगामचोत्क्रामधुरंहनूमान्हिरण्यमालक्ष्यनकोमृदुःस्यात् ॥ १० ॥ इंद्रोव

टीप १ समुद्रः २ मुद्रयासहितः ॥ छ ॥

दन्नागजनित्रिसद्योमध्येयनंरोधकरीभवत्वं ॥ कपेःसतस्माद्भविताविषण्णोवाजेष्यतित्वेत्यवलोकयामः ॥ ११॥ व्यादाय
वक्त्रंपुरतःस्थितायांनाम्नेयमर्थात्सुरसानवेति ॥ साम्नासस‍ंक्षिप्यवपुर्हृदंतंधाम्नाविमृश्येवबहिर्निरागात् ॥ १२ ॥ गच्छा
म्यहंरामनिदेशहेतोर्नमोस्तुतेनागजनित्रिविघ्नः ॥ माभूद्भवेहापिनचातिन्हीताक्रीतासिहार्दात्कपिनेतिचोक्ता ॥ १३ ॥ त
थाभवत्वंविगतव्यथाकथस्तारापथस्तेपियथामहापथः ॥ प्रथिष्यतेमैथिलराजकन्ययारामोरिनाशेऽशिथिलोमहारथः ॥
१४॥ ततःपरंसिंहिकयागृहीतःकुतःपुनःसासुरसाभवेदियं ॥ निश्चित्यभिन्नेत्यसुभिःसतस्यास्तुंदंप्रविष्टोनिरगात्त्वरान्वि
तः ॥ १५ ॥ देवैर्भियायद्यपिनंदनोद्भवैःसमीरसूनुःकुसुमैःसनार्चितः ॥ तथापिपारेब्धिपलाशिभिःकिंकरिष्यतेनोजड
तेतिरक्षसा ॥ १६ ॥ तत्रत्रिकूटेविश्वकर्मणामनसानिर्मितामिवलंकांनिरीक्ष्यनिरर्थमद्यसार्थंपरित्यज्यार्थंकदर्थीकृत्यप्रत्य-
र्थिस्थानीयमागतंपलायतेलीनतयानसाम्नानापिदानेनधनाधिपस्यापिभवनेनस्वाधीनेननाप्युपजापेनप्रजापतिनातथाकृ
तेनपरीवापेनवश्येयमवश्यायसंहतिरिवराक्षसजातिर्नापिदंडेनखंडनीयायतश्चंडारणशौंडापिचंडकुंडपरिपूरणमात्रप्रधा

डीप १ पर्युप्तो तस्थितो ॥ छ ॥



नापरमस्तिस्वस्तिपुरापशुपतिदर्शनायागतस्यैतस्याअधिपतेः पूर्वविहितपापेनजनिततापेननंदिनाकापेयसहितः पुरुष-
स्तवांतंविधातेतिवितीर्णःशापएवद्वारपान्निवार्यनिर्धार्यतयानुगृहीष्यतीत्ययमेवचेत्पंचमउपायइतिभृशंनिमृशन्नेवबविवशो
वपुषाकृशस्तस्थौ ॥ विचित्यरूपाणिवराणितत्रवार्याण्यवार्यंवृषदंशरूपं॥ सर्वत्रसद्योवृषदंशमात्ररूपोहिभूत्वास्मविवेष्टु
मीष्टे ॥ १७ ॥ पवमानसुतोतरत्समुद्रंनचभीस्तस्यसमाविशन्मनः ॥ करणंरघुवीरशासनात्ससमुद्रोप्यभवद्यतःकपिः॥
१८॥ पारेसमुद्रंकपिमुख्यदूतोवधूंविचेतुंस्वकुलस्यचाप्तः ॥ नाकंचरंतद्द्रजनौविमृग्यमितीवमत्वारविरस्तमाप ॥ १९॥
मदीयनामोतरनामदूतःसीतांविचेतुंयततेरिपुर्या ॥ साहाय्यमेतस्यकरोमित्द्दष्टइतीवचंद्रोपियद्यौप्रकाशं ॥ २० ॥ मयापु
रावेदवतीकृतासतीसीतासमाराभिमुखंममोन्मनाः ॥ यारामचंद्रंनचभूतपूर्ववत्प्राप्तेहिदूतेप्रचकाशइंदुना ॥ २१ ॥ पुरंप्रवि
ष्टःपवनात्मजोयंतमःप्रधानाशरचित्रभेदाः ॥ सीताचदृष्टौभवतात्सुखेनेत्यस्याद्यचंद्रोप्युदयंगतोभूत् ॥२२॥ तदनुतांप्रवि
शन्पवनात्मजोनगरदेवतयासतुधिक्कृतः ॥ प्रतिनिहत्यशयेनतदास्मतांप्रतिविवेशपुरंहितदाशयात् ॥ २३ ॥ कृत्वापुरस्ता

त्पवमानसूनुर्व्योमंसपादंनगरंविवेश ॥ विद्वत्धुरीणोर्यमशिष्यमुख्यःसंसूचयच्छत्रुशिरोनिविष्टं ॥ २४ ॥ नकेवलंमैथिल
राजकन्यांविचेतुमेषप्रचचाररात्रौ ॥ गृहैःसमस्तैरपिराक्षसानांसौहित्यमग्नेःसखिजोस्त्वितीव ॥ २५ ॥ विलोक्यरक्षःपति
सद्मचारुपद्माश्रयंपद्ममितीवमत्वा ॥ सिंदूरवन्ह्यंचितलूमशुंडावशाल्लुनातिस्मनुकीशनागः ॥ २६॥ सतत्रतत्रभ्रमतिस्म
नैकधापरंनतांमैथिलराजकन्यकां ॥ ददर्शबव्हीरभिरूपरूपिणीर्नैयंतथेत्येषनिरस्यतास्ताः ॥ २७ ॥ गुणैःप्रतीतैरभि
रूपरूपांमंदोदरींराजवरोपभोग्यां ॥ दृष्ट्वातदानींकपिर्वीरगण्योह्यमन्यतेयंजनकात्मजेति ॥२८॥ तीर्त्वापिसिंधुंशतयोज
नावधिंममज्जरक्षोवनिताप्रदर्शनात् ॥ आनंदसिंधौप्रथितेस्वपेन्नसापत्याविहीनेतिसउन्ममज्जहि ॥२९ ॥ इतस्ततस्तत्र
विचित्रचित्तःसरावणांतःपुरमृध्दिमत्परं ॥ ददर्शसीतांनददर्शतस्मात्समीरभूःखिन्नइवासतत्क्षणं ॥ ३० ॥ यंदृष्ट्वाकृतिन
स्त्यजंतिनियतंशोकंसदादुस्त्यजंसेयंपाणिबिसप्रसूनवशगातस्यास्तिसीताकथं ॥ शोकस्थानसदृक्षराक्षसगृहेतस्मादशो
कस्थलेमृग्यासूक्ष्मधियेत्यशोकवनिकांयातःसमीरात्मजः ॥ ३१ ॥ चारुण्यशोकविपिनेपवमानसूनुःस्वापेचिरायविचिते

१ अपांसमूहआपंशोभनमापंयस्मिंन्नप० निद्रायां ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥



रजनेस्तुरीये ॥ यामेसुवर्णमयवृक्षगणाननेकान्पश्यन्बभूवचिरजीविवरोद्भुतेतत् ॥३२॥ दिशंतुसर्वेममनिर्जरोत्तमाःसिद्धिं
रघूणांप्रवरस्ययोषितः ॥ दृष्टौसमद्यःक्ररवैनमांस्यहंलुंपंतुतानीहममाघसंततिं ॥३३ ॥ वनौकसांश्रेष्ठतमोनगौकसः॑क्लुतेन-
शाखाभ्यसनेनमारुतिः ॥ अबोधयज्जातुचिदंबरंगतैर्भूतंगतिःस्याद्भवतांसतीतिसः ॥ ३४ ॥ स्वांतंनितांतंविरहेणतांतंशां
तिंप्रणेतुंरघुराजकांता ॥ प्रांतेवसंतेपिगतास्रवंत्याभवेदितःसेतिनिरीक्षणीया ॥ ३५ ॥ अत्युच्चभावाद्विलिखंतमंबरंकैला
सगौरंतरुभिर्विराजितं ॥ प्रासादमभ्र्यंवरशिल्पिनिर्मितंमध्येवनंतत्रददर्शसीतया ॥ ३६ ॥ इयंभवेत्सावरवर्णिनीयतस्त्वे
कंवसानावसनंमलीमसं ॥ चिरायवेण्यामकृतप्रसाधनाविनिश्चिकायेतिकपिःसमेधया ॥ ३७॥ ययानिरस्तानिविभूषणा
निचेलाहितानिप्रसभंनतांग्या ॥ तदंबरंतानिविभूषणानिसेयंयतस्तत्प्रतिरूपहीना ॥ ३८ ॥ तस्यैवभार्याप्रतिरूपरूपा
सएवकांतोहिभवेद्यथास्याः ॥ नचेत्सवाच्योविधिरप्यदक्षःसदृक्षदांपत्यविनिर्मितावितः ॥ ३९॥ प्रसंजनेदिष्टविपर्ययस्य
वस्तूनिशर्किंनियतांत्यजंति ॥ अशोकमूलेकृतसंनिधानासीतासशोकेतिविनिश्चिकाय ॥ ४० ॥ तदनुरजनिशेषेमारुतिर्वृ

टीप १ गत्या प० स्वरेण २ वेदाभ्यासेन प० शाखानामभ्यसनंक्षेपणंतेन ३ जातुचित्कदाचित् प० चिदंबरमितिभंगः ॥ छ ॥

क्षलीनोनिनदमपिनितांतंनूपुराणांचकांच्याः ॥ श्रुतिमधुरमुदारंतत्रसीमंतिनीनांसपदिसतुनिशम्योद्भ्रांतचित्तोबभूव ४१
ततःसूतमागधबंदिसंस्तुतांविधृतस्रस्तमाल्यांबरंनिशाचराधीश्वरंसीतागतस्वांततयाविद्धध्यपंचशरंकार्तस्वरमयतरुवरवार
संवृतामशोकवनिकांप्रविश्यपृष्ठतःप्रियानुरंजनार्थंस्वीकृतसंततगमनासुशतावधिषुसीमंतिनीषुतन्मध्येकासुचिद्गृहीतगं-
धतैलावसिक्तकांचनदीपिकासुपुरतश्चलंतीषुकासुचिद्बालव्यजनतालवृंतधरासुकासुचित्कांचनभृंगाररत्नमयपानपात्र-
सौवर्णदंडमंडितच्छत्रादीनिगतिसमयोपयुक्तानिधृतवतीषुरजनिभरकृतविहारासुमदालसासुमंदगतिंमंदोदरींसहसैव-
निशाम्यतत्पातिसंचरैश्वर्यतेजःप्रसराधिकृतःसमीरकिशोरःकपिवरःपत्रपुटनिलयनतत्परोविदेहराजतनयांसमयासमासन्नं
किमितोपिभविष्यतीतिसंद्रष्टुमुत्कंठितमनास्ताद्दशैवस्थित्यासमतिष्ठत ॥ तदनुतत्रगतांविरहातुरांजनकराजसुतांसनि-
शाचरः ॥ समवलोक्यबलात्परिसांत्वनेवचनविस्तरकृत्यपरोभवत् ॥ ४२ ॥ किमितिकुप्यसिमेविपिनेस्थितातवभवेद
पिनोनमितःपरं यदिभवेदपिनाथनतोभवेत्क्वचिदयंतववाक्यकरःखलः ॥ ४३ ॥ कुरुघनोरुपुरःपदसर्पणंविरचयामिवरां



गकमुत्तमे ॥ अतिविलीनमितोपिवपुर्ममप्रतिकुरुष्वयदिच्छसिकामिनि ॥ ४४ ॥ सुदतिचेत्कुरुषेश्रवसोर्वचःसुतनुभूत
पतिंसमुपासितुं ॥ गतवताविजयायशिरांस्यृतेतनुमदायिषतास्त्यधुनातनुः ॥ ४५ ॥ भवतिलोकततेरतिभीतिदोजगति
रावणइत्ययमारवः ॥ सतुबिभेतिमनोजनिसात्कृतःकुरुमनोमयिभाग्यमथास्तुते ॥ ४६ ॥ यदिगतंसखिभूतपतेर्गृहेन-
नमितंहिसतीपदपंकजं ॥ सतुकरोतितवांघ्रिगतंशिरःकिमितिनोच्चपदंप्रतियास्यसि ॥ ४७ ॥ यदिकरोषिकरेकरभोरुमां
जनकराजकुलंभुविमान्यतां ॥ सुतनुयास्यतिसंतनुवैभवंविमृशतत्तनुदानकृतेःफलं ॥ ४८ ॥ तृणदलास्तृतभूमितलेशयः
क्वचमहारजनांचितमंचके ॥ दलकषायजलंफलजालकंक्वचसुधासममन्नमधिश्रितं ॥ ४९ ॥ यआरुरुक्षुश्च्युतिमापतेनरा
मेणतेभीरुसुखंनभावि ॥ इतीवविज्ञायमनस्विनित्वंनतंपदोर्मामुररीकुरुष्व ॥ ५० ॥ परःशतामांप्रतियांत्यजस्रमंगांग-
नामैथिलिसन्नतांगि ॥ अहंपरंत्वामनुयामिपश्यभाग्यस्यसीमानमहोत्वदीयां ॥ ५१ ॥ रत्नानियानिस्थिरजंगमानिसर्वा
णिमय्येवलसंतितानि ॥ यथोपजोषंप्रतिदत्स्वभुंक्ष्वसाकंमयापीतिकिमुब्रुवेहं ॥ ५२ ॥ वक्तुंप्रवृत्तामिथिलेशपुत्रीमध्ये

चकाराशुतृणंतदानीं ॥ प्रख्यापयंतीतितृणायमत्वाब्रवीम्यहंत्वांनबिभेमिरक्षः ॥ ५३ ॥ यत्स्वानिरक्षोजगदंबिकायाःपा
दाब्जमासाद्यशिरांसिनैव ॥ नम्राण्यतस्तानिपदोर्ममाद्यस्वस्थोभवेहप्रविहायपत्युः ॥५४ ॥ दाराःपरेषांनगृहेषुकार्यावा
रामधूनामपिनैवसेव्याः ॥ धाराःशराणांनमृगेषुपात्याःकाराप्रदाश्चात्रभवंत्यमुत्र ॥ ५५ ॥ विज्ञानसंपत्प्रवणोनजंतुस्त्व
दीयपुर्यामितएषमंतुः ॥ विधीयतेतेत्यजतंसकंतुंहंतुंसमर्थोनबिभेषियस्मात् ॥ ५६ ॥ पतीरणाग्रेकुशलोनिहंतुंत्वांनात्रसं
देहलवःपरंतु ॥ नंतुंत्वदीयानिशिरांसिसंतुदक्षाणितत्पादयुगेप्यवंतु ॥ ५७ ॥ संकोच्यकामंप्रविमुंचनिग्रहंयंचापिधत्से
मनसात्यसाध्यं ॥ नोचेदसून्पंचनिरस्यवंचकोद्विपंचमूर्धन्कुरुयत्त्वमिच्छसि ॥ ५८ ॥ एकापराधेननसर्वनाशःसद्भिःप्रशं-
स्योभवतीहरावण॥ प्रणम्यपादौरघुसजसूनोरहंसमर्प्याबहुभषणान्विता ॥५९॥ तदनंतरंविगतनयःपुलस्त्यतनयोनति
भीतांधृष्टंवचोवदंतींसतीतिप्रथांसतींप्रथयंतींविदेहराजनंदिनीमवलोक्योत्फाल्यनयनेउल्लास्यश्मश्रुश्रुतंचश्रोतव्यंविदि-
तंचवेदितव्यमध्यवसितमध्यवसितव्यंद्विमासावधितेसतीत्वमव्याहतंकुतस्ततोनिशामयपार्यैतिकंमद्भवनेकांचनशयने-



यदिभवतीनागच्छेत्ततः सूदाःसंजातमोदामद्धृत्तयेकल्प्यमानकल्यवर्ताययोजयेरन्निितिविमृश्ययत्कर्तव्यंतत्कुर्वित्युक्त्वाअ-
नेनवचसावशाभविष्यतीतिमन्वानोराक्षसत्वंसंतन्वानःकिंचित्कालंतथैवोवास ॥ रामस्ययावन्नयनायनेस्थितिंकरोषिनोता
वदवेहिजीवितं ॥ त्वदीयमेतच्छयनीयमंत्रणंपरस्त्रियाजाल्मशरारुकाधम ॥ ६० ॥ इतितस्याअधिकर्णमधिरोहिणींवच
नधोरणींविषमतयांगीकुर्वाणः कुणपाशनग्रामणीरावणोगोकर्णिकर्णप्रावरणेहस्तिकर्णिलंबकर्णिअकर्णियथेयंराजन्यवधू
र्वशाभविष्यतितथाप्राध्वंयतध्वमित्युक्त्वापुनःपुनःकोपसंरक्तेक्षणस्तस्मिन्क्षणेकमलेक्षणयाविभूषणमालिन्याधान्यमालि-
न्यापरिष्वज्यत्यजराक्षसराजाकामांइयामांकामयमानांमामंगीकुर्विंतिसप्रयत्नमपवाहितःस्वमेवभवनंप्रविवेशतास्तमनु
प्रविविशुः ॥ रक्षस्तरुण्यःकरुणाविहीनाश्चक्रुस्तथावर्णगणंविगण्यं ॥ यथाप्रवातेकदलीवतन्वीपतिष्यतिभ्रांततयापिसी
ता ॥ ६१ ॥ सीतेत्वांभक्षयिष्यामःपास्यामोरुधिरंतव ॥ यास्यामःस्वगृहंरम्यंसंवेक्ष्यामःसुखंनिशि॥ ६२ ॥ तद्राक्षसीनां
वचनंनिशम्ययातुंयमद्वारमनंतरायं ॥ विदेहजाताप्यकरोत्तदानींशापाक्षरंपुण्यजनोपभोग्यं ॥ ६३ ॥ भक्ष्यतेयदिसती

भवतीभिर्भक्षतस्त्वतनुमद्यावियुक्तां ॥ भर्तृभिस्त्रिजटयोक्तमितीदंस्वप्नएषतमपिशृणुतैकाः ॥ ६४ ॥ सर्वांहिलंकादिशम-
प्यवाचींसंप्रस्थितेशेनमयाद्यदृष्टा ॥ सीताप्युदीचींदिशमाशुयांतीकांतेनसाकंशुभयानमास्थिता ॥६५॥ संप्रापवामा-
रघुराजसूनोर्निमित्तजातंसकलंहिवामं ॥ वामान्यपिप्रापुरथाशरौघावामाभिराशुप्रसभंतदानीं ॥६६॥ सीतानिशम्य
त्रिजटासमीरितंवाक्यंनिमित्तानिशुभानितन्वी ॥ जातानिदृष्ट्वापिसतीतिखिन्नादेहंसमुद्बंधुमियेषसीता ॥६७॥ हनूमता
सर्वमिदंहिदृष्ट्वाविमर्शनान्निश्चितमेतदेव ॥ सीतामनाश्वास्यगतंयदीतोजह्यादसूंश्चेदपिकिंकृतंमे ॥६८॥ राजाभवद्दशर
थःप्रथितःपृथिव्यांपुत्रोपितस्यगुणवाननुजाबलाभ्यां ॥ तद्वाक्यतोविपिनभागमवापरामोरक्षोधिपेनवनितापहृतातदीया-
॥६९॥ कालेनसोपिविचचारवनाद्वनांतंतांमार्गितुंनिरपराधपतद्विपत्तिं ॥ मध्येपथंतदनुमित्रवरंकपीशंसंप्राप्यवालिन
मथोनिजघानरामः ॥७०॥ सर्वासुदिक्षुविचरंतिकपीशदूतास्तन्वींविमार्गितुमथापिमहानुभावाः ॥ नासादिताभगवती
सकलैर्हिदूतैःसासादितेयमभवद्रघुवीरभाग्यात् ॥ ७१ ॥ सुधाविशिष्टंकपिनासमीरितंनिशम्यसीतांतरिताबभूव ॥ मुदो



विषादस्यतृणानिजक्षतीवत्संस्मरंतीववनेषुरोहिणी ॥७२॥ स्वप्नोयमीदृग्वचनंनिरर्थकंत्यक्तास्मिरामेणतथैवनिद्रया ॥ भा
व्यंहिरक्षःकृतयैवमाययाजानामिपश्यामिधवैकमानसा ॥ ७३ ॥ अशोकवृक्षोपरिदृश्यतेसौशुक्लांबरावेष्टितगात्रएषः ॥
कीशोगभीरंमधुरंत्वदिस्थंवदत्ययंशांततनुःकिमर्थं ॥ ७४ ॥ नमोस्तुतस्मैधिषणायमामकंसंजातवाक्येधिषणाप्रवेशनात्
व्यनक्तिसर्वःकिलयोर्थजातकंशुभायभूयादपिवाङ्नचान्यथा ॥ ७५ ॥ द्रुमात्समुत्तीर्यविनीतवेषःकपिप्रबर्होंजलिमादधा
नः ॥ शीर्षेस्थितोग्रेवचनामृतेनसंस्नापयंस्तांविरहाधितप्तां ॥ ७६ ॥ कस्यासिवामोरुकिमर्थमेषप्रश्नस्त्वदीयंवदतिस्मलक्ष्म-
क्ष्म ॥ नरेंद्रपत्न्यर्हमथापिचेतःश्रोतुंसमुत्कंठितमस्तिवंशं ॥ ७७ ॥ जन्यस्मिराज्ञोह्यजनंदनस्यजनिर्मदीयाजनकाधिरा-
जः ॥ पतिर्ममास्त्येवसरामचंद्रोवन्यात्वतायात्वधिपेनकीश ॥ ७८ ॥ वैदेहिरामःकुशलीयवीयसावासाद्रिरौप्रस्रवणे-
प्यहर्निशं ॥ त्वदीयशोकाद्गिरिराजधर्मवान्प्रेम्णासचत्वांकुशलंसमब्रवीत् ॥ ७९ ॥ कृष्टाभवच्छोककृषीवलेनभूयश्रुपूरे
णभृशंतुसिक्ता ॥ सीतामनोभूःप्रमदोच्चबीजैर्हनूमतोप्ताशुविराजतिस्म ॥ ८० ॥ पुनःपुनर्मारुतिराशुकर्षकस्तस्यामनःक्षे

त्रगतानिपेशलः ॥ निरस्तवान्राघवलक्ष्मशस्त्रतःपौलस्त्यशंकामयकत्तृणान्यपि ॥ ८१ ॥ सुग्रीवमैत्रीस्वजनुःप्रशंसामुद्रा
प्रदानादिपयःप्रसेकात् ॥ उल्लासयामासमरुत्सुतस्तांबभौचसातेनसुखेनपुष्टा ॥ ८२ ॥ प्रब्रूहियत्तेमनसेप्ररोचतेधवेनसा
कंममसंगमोस्त्विति ॥ एतर्हिचेच्छस्तमिवास्तिमानसेमत्पृष्ठमारुह्यसुखेनयास्यसि ॥ ८३ ॥ तथाविधस्त्वंचपतिस्त्वदी
यःकांतोममद्विड्ढननेकृतांतः ॥ स्पर्शोनबुध्यान्यनरस्ययोग्योनचापिपाटच्चरवृत्तिरर्हा ॥ ८४ ॥ आस्तामिदंमैथिलराजक
न्येपत्यौव्रतंतादृशमस्तिमन्ये ॥ यत्त्वामपश्यंकिलदेविधन्येनिदर्शनंदेहितुलोकमान्ये ८५ विज्ञस्त्वंहनुमन्निदर्शयधरेका-
कोजयंतस्तदाभूत्वामांस्तनयोरदारयदतोरोषात्त्वमैषीकतः ॥ एकाक्षंव्यदधाधरांतरगतंतस्मात्कपोलस्छितंस्त्रस्तंमत्तिल
कंनवंसमकरोस्त्वंमानसेनेतितं ॥ ८६ ॥ काकीयवृत्तंगिरिराजमूर्ध्निजातंभवत्यावचनेनसीते ॥ संस्मारयाम्यस्यतथापिता
पंजह्यात्कथंत्वद्विरहाग्निजातं ॥ ८७ ॥ मासद्वयंमेकृतजीवितार्थंरक्षोवधिंतत्कपिवीरबुध्या ॥ बुध्यस्वशीघ्रंसहलक्ष्मणेन
रामःसमीयादितिसंविधत्स्व ॥ ८८ ॥ यद्ब्रवीस्त्वंसकथंविजह्यात्तापंवचोमात्रनिदर्शनेन ॥ तदर्थमेनंसुमणिंददामिवा



युद्ध्वंदेहिरघुप्रवीरे ॥ ८९ ॥ स्वस्त्यस्तुतुभ्यंप्लवगाधिपस्यसैन्येनरामःसहलक्ष्मणेन ॥ त्वांनेतुमागादितिचिंतयत्वंतच्चिं
तनांतेतमपीहपश्य ॥ ९० ॥ इतितत्रप्रशस्ताभिर्वचनरचनाभिःसीतांप्रीतांविधायरक्षसांदमनेप्रार्थितश्चतुर्थोपायएव
वरीयानितिनिश्चित्याभियातेःशक्त्यशक्त्योरविज्ञानाद्भूतः पत्युः कार्यप्रसक्तौप्रत्यवेत्यात्मनोकीर्त्यासहशीतकतांप्रथयति-
विकृतंकिंचित्कृत्वासुकृतंभवेत्प्लवगपतिदाशरथ्योरागतोदूतइतिप्रजास्वपिप्रकटीचिकीर्षुः साहजिकतयैवससामाजिकरा
जसन्निधानंतच्चमहांतंमंतुमंतरानसंजाघटीतीतिप्राकारेणपटीयसींनानाविधविटपिसंकटविकटामशोकाटवींप्राभंजनिः-
पाटयितुंपर्यटाटीतिस्म ॥ यमाश्रिताशोकतरुंविदेहजातमंतराशोकवनंबभंजतत् ॥ यथाद्यवर्णंविजहत्तदाभवत्प्राभंज
निस्तादृशरूपमग्रियं ॥ ९१ ॥ ततोवृक्षाणांभंगेनपक्षिणांनिनादप्रसंगेनविकृतलक्षणारक्षोगणपक्ष्मलाक्ष्यःप्रत्यक्षंकपिना
भाषमाणांसुलक्षणांराघववरवर्णिनींरूक्षाक्षरैःकिंव्यवसितंकिमालपितंकुतोयमशोकवनिकाभंगःकृत्योयंकपिरितिस-
त्यंब्रूहिनप्रत्यवेषिपक्ष्योवाविपक्ष्योवाअस्तिपरंराक्षसीमायाभवंत्यएवजानंतीतिप्रत्युक्ताः सत्वरंरावणांतःपुरंगत्वाअद्भुते

नसत्वेनप्रमदवनंनिःसत्वतांनीतमितिपौलस्त्यायनिवेदयामासुः ॥ पवमानसुतोपिसर्वतस्तत्कृतवान्भूमितलंविशाखिकं
प्रभवेत्कुणपाशकिंकराणासमरेभाविनिमास्मसंकटं ॥९२॥ तदनुप्रमदवनद्वारतोरणमाश्रितःकपिवरोहनूमान्रक्षोराजप
रतंत्रान्पीवरभुजान्नामशूरान्समुपागतान्समरेअकिंचित्करान्दंडधरपुरद्वारपरिसरसंचारपरान्लोहस्तंभायुधवरेणविधा-
योत्प्लुत्यचैत्यप्रासादमपिभंजयन्सौनपालइवशतंचैत्यपालानपिकालाधीनान्प्राप्तंप्रहस्तसुतमुत्तप्तकुंडलंरक्तांबरधरमु
दूढखरयानंराघवोवालिनमिवजंबुमालिनंततःसप्तार्चिर्वर्चसःसप्तापिप्रधानसुतान्दीर्घसुप्तान्सप्तार्चिर्निक्षेपार्हान्पंचसेनाप
तीनपिप्रेताधिपतिनिदेशवर्तिनोन्वक्षंविचिक्षेप ॥ हठात्परस्त्रीहरणक्षमस्यपलाशिनोव्याजयतीश्वरस्य ॥ अक्षोपमर्दोद
शकंधरस्ययदासतन्मारुतसंप्रहारात् ॥९३॥ अशोकवन्याःपवमानसूनुरंतर्बहूनक्षगणान्बभंज ॥ तत्रैकमक्षंबहिरप्यु-
दग्रंकिंतत्रचित्रंबतवर्णनीयं ॥९४॥ पवमानसुतोवनेस्थितःसन्जितवानक्षमधिष्ठितंजवे॥क्षममस्यजिताक्षताप्रसिद्धाविद
मीदृक्षमितिस्फुटंभवेत् ॥९५॥ तदनुसमरपदमधिरूढोहनूमानप्यनुपदरचितसिंव्हनादंविहितवीरवादंमेघनादमालक्ष्य



विलक्ष्योबहुशस्तंलक्ष्यच्युतशरविक्षेपंविदधानस्तत्प्रहितविध्यस्त्रेणक्षणंनिबद्धतनुस्तदभिवाद्यनिध्यायमानःपुनरपियातु
जनैरज्जुभिर्निबद्धतनुस्तत्कृतांव्यथामवधूयनिभृतनिमीलितनयनयुगलः पदेधृत्वाकृष्यराजसदनमानीतोरभसभरेणभ
रितमानसःक्रमेणसामाजिकजनसंबाधांकैकसीसूनुसभामभ्याजगाम॥तत्रांजनासूनुरवेक्ष्यरावणंसिंव्हासनाधिष्ठितमुग्र
तेजसं ॥ धर्मस्यगोप्तायदयंभवेत्तदानविष्णुनाकार्यमिहापिदृश्यते ॥९६॥ ततःपुलस्त्यतनयोविगतनयःपवनतनयमुदी
क्ष्यविचक्षणोरक्षोगणवरेण्योहस्तमुत्तंसयन्प्रहस्तंप्रतिपृच्छकस्यकिमर्थंमस्यागमनमित्याज्ञाप्यरोषकषायितचक्षुर्मक्षुब-
हुविवक्षुरिवप्रस्फुरद्दंतपटआसीत् ॥ ततःप्रहस्तःपवमानसूनुमुवाचकस्त्वंकुतआगतोसि ॥ किंनामकिंकार्यमिहागमस्य
नभीस्तवास्तांयदिवक्षिसत्यं ॥९७॥ रामस्यदूतोस्मिहरीश्वरस्यनाम्नाहनूमान्श्वसनस्यसूनुः ॥ भियंदधानोहृदयेभि-
यातिर्नसंमुखेतिष्ठतुजातुयातु ॥९८॥ दूतस्त्वंयदसिवनंत्वयाकिमर्थंविध्वस्तंरुचिरतरंकपिप्रबर्ह ॥ विध्वस्तंप्रमदवनं-
विपश्चितामेविध्वस्तेकुरुविभवस्यतेयदर्हं ॥९९॥ वनंमदीयंकपिकीटकत्वयावनीपकेभग्नमथापिसंस्थिते ॥ वनस्यत-

स्याप्यवनंमयाकृतंवैधेयताभविताप्रकाशिता ॥१००॥ उद्यानभंगोयदयंत्वयाकृतोनसांप्रतंतद्यदिवाक्षिरावण ॥ उद्यान
कार्यैप्रयतस्यभंजनंनेतःसपोष्यस्यभवेत्तवापि ॥१॥ वक्तासिवाचस्पतिनासमस्त्वंकिमर्थमागाःपुरमस्मदीयं ॥ हताःकि
मर्थंममकिंकराणांगणाःकपेब्रूहिकिमत्रचोत्तरं ॥२॥ वृत्तांतमेनंकुरुमानसस्थंकृत्याकृतांतोस्मिनवाङ्मिधुर्यः ॥ सीतांभुजं
गींविनिधायमूर्ध्निपरत्रयस्याःप्रतिकारमिच्छसि ॥ ३ ॥ खरादिकानांवधमाशुशृण्वन्मारीचमप्यागमयोयमालयं ॥ सुग्री-
वराज्यस्थितिमप्युदग्रांनवाशृणोर्वालिवधंत्वमीदृशः ॥४॥ किंकिंकरैस्तेपकृतंमदीयंकिंकिंकरैस्त्वंह्यपकर्तुमिच्छसि ॥ अ
नक्षतातेविहितामयाद्यकुर्यामनोनापियथाचलेदिति ॥ ५ ॥ अवध्यंभाषमाणस्यविमुक्तब्रह्मास्त्रबंधनस्यवधएवसाधीया
न्नबंधइतिव्यादिशंतंधिकृतधनाध्यक्षमाराधितत्र्यक्षंसमक्षंरक्षोधिपंमनीषिणामग्रणीरनीषणोविभीषणोनदूतंशूलप्रोतंकु-
र्वेतिकृतिनोनूतनयसिनीतिपथंयदिप्रतिकर्तुमिच्छसिचिन्हितंकुरुष्वेतियथायथंकथयामास ॥ विभीषणस्यापिवचःप्रग-
ल्भंनिशम्यपश्चात्सनिशाचरेंद्रः ॥ सलोमलूमंतुविधायदीप्तंकीशोनिरास्योस्त्वितिसोभ्यवोचत् ॥ ६ ॥ पुच्छंसंवेष्ट्यपाट

टीप १ नवनं भग्नत्वात् प० रक्षणं २ उदूर्ध्वंयानंतत्कार्यंतस्मिन् ३ अक्षःशकटावयवः प० पुत्रस्तद्राहित्यं ४ अनःशकटं प०मनश्चित्तं ॥ छ ॥



च्चरशकलशतैरज्जुभिःसंप्रणाह्यप्राज्यस्नेहप्रणालीमपिसमितिविधायाशुवन्हिंनिधाय ॥ रक्षःशूरैर्निबद्धःप्रतिविशि-
खमसौनीयमानस्त्वदर्थंसीतेशाखामृगोयंविमृशनहितवाप्यस्तिमोक्षोन्यरीत्या ॥ ७ ॥ वालधौहनुमतःप्रतिसृष्टोयातुभिः
सतुकृशानुरुदग्रः ॥ वारिजातमणिसान्निधिहेतोःशीतलःसमभवन्नुविवृध्यः ॥ ८ ॥ वारिजातमपहायनतस्थौनोत्ततार
तदवीक्ष्यनभस्तः ॥ प्रापतंसमयतीर्यरहस्तस्तन्नुवन्हिरपिनैवददाह ॥९॥ तदेवसीताकुणपाशनारीगणेरितंवाक्यमु-
दारसत्वा ॥ निशम्यतुष्टावतथाश्रयाशंस्वभावमप्याशुमुमोचयेन ॥ १० ॥ दृष्टानरात्रैरभसान्मयेयंलंकानिशाटैर्यदि
दर्शयिष्यते ॥ आलोकिताःस्यादपिचाग्निसात्स्याद्ध्वंतुरक्षांसिनयंतुकुत्रचित् ॥ ११ ॥ रामप्रसादादथवाविदेहजापति
व्रतात्वेनकिलातिशीतलः ॥ वायोःसुतत्वादपिजातुनानलोभृशंज्वलत्येषनमांदहत्यपि ॥ १२ ॥ यद्बंधनान्मोचयितारमा
श्रितस्तदर्थकार्योद्यतमप्यलंतुमां ॥ बद्धुंसमिच्छंतिहठेनराक्षसास्तदच्छिनत्कीशवरोपिपाशकान् ॥१३॥ वालहस्ताग्नि
संयोगधूपनेनसुधूपिता ॥ लंकाप्रदीप्तासौवर्णीभातिरक्षोदृशांभृशं ॥ १४॥ पुच्छंनिधायप्रतिसद्मकीशस्तत्तद्गृहस्वामिनि

टिप १ अंगदं २ समुद्रं ३ मणिं ४ पुच्छं प० केशसमूहं ॥ छ ॥

रासितोपि ॥ यावन्नदग्धंसदनंसमूलंप्रयातितावन्नगृहांतरंसः ॥१५ ॥ क्षणेक्षणेमक्षिकयासमानोरक्तेक्षणःक्ष्माभृदुदाररूपः ॥ सस्नेहपाटच्चरवेष्टभागंजग्राहतत्याजददाहतेन ॥१६॥ दग्ध्वापुरंतांपवमानसूनुःसंतर्प्यवप्तुःपरमंवयस्यं ॥ अभावतोदाह्यगृहस्यसिंधौनिर्वापयामाससुखेनपुच्छं ॥१७॥ रक्षःप्रतापाग्र्यतमःप्रविष्टामदृश्यरूपांक्षणतस्त्रिलोकीं ॥ दग्ध्वासलंकांज्वलनेनकीशःप्रकाशरूपामकरोत्तदानीं ॥ १८ ॥ समुद्रतीरंसमयासतिष्ठन्ददर्शलंकांबहुशोग्निदग्धां ॥ व्यचिंतयज्जाल्मतयाभिषिक्तोभूवंप्रदग्धायदिजानकीति ॥ १९ ॥ कुल्यांवधूस्तेयमसौविधाययद्रावणोनैवददातितस्मै ॥ सूर्योशतोग्नेःपवनस्यसाह्यंददाहलंकामितिवाप्रदाय ॥ २० ॥ सीताविदग्धापियदिप्रदग्धाध्रुवंविनाशोनरवानराणां ॥ मदागसातत्रनिदर्शनंमेपौलस्त्यमंतुर्हिददाहलंकां ॥ २१॥ कपिप्रबर्हेभृशमंतरंगसंजातभंगेविकृतप्रसंगे ॥ सिद्धाःसमिद्धप्रमदानुविद्धाःसीतानदग्धेत्यवदन्नभस्तः ॥ २२ ॥ ततोहनूमान्सनिशम्यवाक्यंसिद्धैरितंतत्रविमृग्यसीतां ॥ मूलेविशालेकिलशिंशपायाददर्शहर्षात्प्रणनामभूयः ॥२३॥ ददाहदूतस्तवयत्तुलंकांनतावदेतत्प्रमदायुतस्य ॥ पत्युर्यथामेजनकात्मजेत्वत्पत्पद्मदृष्टिःप्रमुदेतथास्यात् ॥ २४ ॥ हुताशतापप्रशमंविधातुंहनूमतोमोदभराश्रुपूरं ॥ सीतापिदृष्ट्वेवचकारपश्चात् संभाष्यकीशंविससर्जकष्टात् ॥ २५ ॥ यत्पादपद्मस्मृतिमात्रतोपिभवांबुधेःपारगताभवंति ॥ कियानयंलावणसिंधुनाथोदूतस्यतत्कार्यनिविष्टबुध्धेः॥२६॥ *उत्सृष्टःशरइवलक्ष्यदेशदर्शीविध्वैनंसपदिजवेनझंकृतेन ॥ अक्षय्यंशरधितटांतरंप्रविष्टःसंकाशैर्न्यमिलदयंकपिप्रबर्हः ॥२७॥ पूर्णानकानीवमुदाफलानिमूलानितस्माअपिकीशवीराः ॥ ददुश्चतस्माज्जगृहुस्तदानींदृष्टाशुदेवीतिसमीप्सितंते ।२८। भूत्वाहनूमान्प्रकृतिस्थितस्तदायद्यत्समस्तंशुभशंसितान्प्रति ॥ शशंसतेचापिनिशम्यहर्षिताःसंमंत्रयामासुरितिप्लवंगमाः ॥ २९ ॥ गत्वोदधेस्तीरमपारमुत्तरंहत्वापिरक्षःसभमानयामतां ॥ तत्रांगदोजांबवतासमीरितोदृश्येतिशिष्टिर्नतुनेतुरन्यथा ॥ ३० ॥ निर्गत्यतीरादुदधेःप्लवंगमागतावनंकीशवरैःकृतावनं ॥ समीरसून्वंगददत्तशिष्टयोबभंजुरुग्राःपपुरप्यथोमधु ॥ ३१ ॥ निवारितांश्चक्रुरथापिरक्षिणोनवाक्यमेतेजगृहुर्निवारिताः ॥ पुरोपितत्रासतुयःप्लवंगमस्तत्रासुग्रीवपदंप्रजग्मिवान् ॥ ३२ ॥ निवेद्याधिभुवेसर्वंकृतंवानरसत्तमैः ॥ सानंदमाप्तस्तूद्यानं

* एतस्स्तवकारंभषड्विंशांविलोकयेतिपद्यमत्रत्यं

यतोदधिमुखोगतः ॥ ३३ ॥ मधुप्रपश्यंतिनचप्रपातंपश्यंतितेषांमधुदुर्लभंस्यात् ॥ वयंप्रपातंतुसदैवकुर्मःपास्यामसर्वंम
धुकोनिरस्येत् ॥ ३४ ॥ दधिमुखेनसमीरितमादरात्प्लवगनायकआशुनिशम्यतत् ॥ इतिजगामसराघवमंजसाकथयितुं
कृतकृत्यइतोह्यसि ॥ ३५ ॥ मयाश्रमःसंविहितोमहातरुर्नवारिजातेनविनाफलीभवेत् ॥ कपिप्रवीरोपिनुवारिजातकंकृ-
त्वापुरोदाशरथिंव्यलोकयत् ॥ ३६ ॥ दृष्टामध्येसमुद्रंझटितिपवनवत्पर्वतःपाणिनामेसंस्पृष्टःसिंहिकाभ्रितदनुविनिहता
नागमातानिरस्ता ॥ गत्वापारेसमुद्रंदशमुखनगरींद्वंद्वयुद्धेपरास्तानकंसीताविविक्त्वाप्रमदवनगताभाषितास्वस्तितेस्तु ॥
३७ ॥ मयाकृतोयातुजनप्रतारोविधीयतामर्णवसंप्रतारः ॥ कुर्याद्भवदेस्त्वंतुयथासतारःसर्वेवयंतत्समयेवितारः ॥ ३८ ॥ दि
क्षुविदिक्षुविचिन्वतांहर्यृक्षाणामन्यतमान्महत्तमात्धनूमतः प्राप्तंविचित्रोभयवियोगारणिसंभवमाशुशुक्षणिंशमयितुंचूडा-
मणिंरणरणिकावतिहृदयेकृत्वाबहुकालमिक्षुचापक्षुरप्रसंतक्षणक्षोभणस्यतितिक्षुरपीक्ष्वाकुकुलसंभवोरामःस्वपक्षीयंतंप
क्ष्मलाक्षीमधिकृत्यरक्षोनिकृतिप्रकारमप्राक्षीत् ॥ नाकस्यपाकस्यचशास्तुरुग्रंपाकस्यकस्यापित्वदेदचरित्रं ॥ सुखायभूया

दितितद्विचित्रंदत्वाप्यभिज्ञानमणिंशशंस ॥ ३९ ॥ अशोकवनिकायांत्वयावियुक्ताराक्षसीभिस्तर्जितासमूलमंतर्जितकामा
तैस्तैरुपायवचनैराश्वासितामामधिकृत्यविकृत्यवदनंकृत्योपयुक्तमेतदवादीत् ॥ सदाविनेताकिलराक्षसानांनेतामदीयो
बतरामचंद्रः ॥ नेताचनस्यान्निजपादयुग्मंनेतःपरंजीवितुमुत्सहेय ॥ ४० ॥ त्वांकांतपादौयदिनायिनेष्येपादौगुरोर्जान
कितेपिशप्स्ये ॥ त्वामद्यनीत्वाशुसुखंशयिष्येनेतुंवयःसाधुतयायतिष्ये ॥ ४१ ॥ याहंकपिश्रेष्ठपुलस्त्यसंततेरंकंसमारूढ
वतीह्यभूवं ॥ तत्पारवश्यादवधेहिसांप्रतंजानीहिवश्यात्मपरास्मिमाक्रुधः ॥ ४२ ॥ निलीयकुत्रापिरहःसुशंकितोवसाद्य
तावन्ममधैर्यहेतवे ॥ एकाहमत्रासिचकर्णधारकोदुःखांबुधेस्तारणकृत्यकारकः ॥ ४३ ॥ तदात्वयोग्यैर्वचनप्रवाहैःसंप्रा
पिताप्रीतिततिंमयासा ॥ तथापिशीघ्रंकुरुयत्नमद्यमुक्तायथाराघवसाविपक्षात् ॥ १४४ ॥ इतिश्रीमदभिनवरामायणचं
प्वांदशमःस्तबकः ॥ ॥ ६९ ॥ ततारसिंधुंविचचाररात्रौलंकाप्रदेशेमहतःप्रयत्नात् ॥ ददर्शसीतांचददाहलंकांन्यवेदयद्य
द्यधितापितस्मै ॥ १ ॥ श्रुत्वाहनूमद्वचनंसरामोदेयंचपूर्णानकमप्यथास्मै ॥ किंस्वित्सदृक्षंभवितेतितस्मैददौपरिष्वंगमति

प्रशस्य ॥२॥ सुदुष्करंकर्महनूमताकृतंतस्मैपरिष्वंगमदाद्रघूत्तमः ॥ मन्येपरिष्वंगजमुख्यसौख्यकृद्वस्तूपलब्ध्यर्हमितीवराघवः ३ एकोगतःपारमुदन्वतोहरिर्वातात्मजोदुर्घटकर्मकारकः। गच्छेयुरेतेबहवःप्लवंगमाःकथंनुसुग्रीवकिमत्रमंत्रणं मयाप्रदेयंभगवन्यदुत्तरमनुत्तरंतत्रभवेद्रघूत्तर ॥ प्रश्नेत्वदीयेप्रतिवाक्यसत्वतोविचित्रचित्तोस्म्यधुनाप्लवंगमः॥ ५ ॥ पारंगमाःस्युर्भगवन्प्लवंगमानिदर्शनंतत्रभृशंसमीरजः॥ एकोपिनोचेद्रघुराजसांप्रतमालींनिबध्नीमजहीहिसंकटं ॥ ६॥ सुग्रीववाक्यंसविमृश्यमृष्टंचित्तेहनूमंतमुवाचत्दृष्टः। लंकास्तिकीदृक्कतिवासपंकारक्षःसुरंकाःश्रितवीतिवंकाः ॥७॥ लंकामयंकालयवीरगंतुंलंकामयंचालयरावणंत्वं ॥ शंकात्वदीयेहृदयेपरंकायंकामयेथाःसइहागदोस्ति ॥ ८॥ अनुमतंतुनिशम्यहनूमतोरघुपतीरविमंबरमध्यगं ॥ स्वकुलदैवतमाशुविलोक्यतंगमनमभ्यदिशत्पृतनाकृतं ॥९॥ ततःसुग्रीवाभिहितावाहिनीवाग्रतोद्रुतनीरासंक्रीडमानगजारण्यानीवसगवयाप्रासादवीथीवसगवाक्षादक्षिणेपार्श्वेगवांगोष्ठीवसर्षभासव्येउदग्दिगिवसगंधमादनाकौसल्येवरामेणसुमित्रेवलक्ष्मणेनसगर्भाकृष्णपक्षरात्रिरिवपश्चाद्दृश्यमानर्क्षराजाहमहमिकाविकृ



तचेतस्तयाश्रूयमाणशूरकृतस्वस्वापदानातद्रक्षणायसमंताद्दृश्यमानशतबल्यनीकापुरस्तात्कुमुदेक्षणाद्दष्टिदोषनिवारणक्षमलक्ष्मणाकलिताद्दृष्टैवेतरवाहिनीत्यक्तवितीर्णमार्गानायकंप्रीणयंतीदिवानिशमास्थितानुकूलयंतीविविधानिवृक्षजातानिसरांसिदर्शयंतीसर्वदैवसत्कुलस्त्रीवास्वतंत्रावाहिनीदक्षिणस्यनायकस्योपांतभूमिमुपागताद्दष्ट्वातंन्हीमतीताद्दशीभिःकृत्यरचनाभिर्विलंघयितुंविहर्तुंमंत्रयतिस्म ॥ सौमित्रिर्जोषमास्तेकटुतरवचनैःप्रापितःक्रोधगेहंतातोयातःस्वकर्मप्रचरणफलितांदेवभयांगतिंसः ॥ शत्रुघ्नःकेकयीजोनिवसतिचपरंदूरदेशेविदेहःश्वश्रूः सर्वंसहास्तेयदिविरहवतीसीतयास्यान्नचैतत् ॥ १० ॥ सौमित्रेभ्रमतावनेषुभवताध्वाकोविदारःपरंदृष्टोस्तीत्यनुयोक्तरिप्रभवतिप्राप्तोहमस्म्युत्तरे ॥ सत्यंदाशरथेरघूत्तमयथात्वंप्राहनोतत्तथाप्रश्लिष्टःपरमस्त्यकारइतिमेवाच्योनुयोक्तास्तियः ॥ ११ ॥ हनूमतायद्विकृतंकृतंतद्विलोक्यपुर्यांकुणपाशनेंद्रः॥ आनीयसर्वान्सचिवान्सभायामित्थंस्वपथ्यंवदतिस्मन्हीतः ॥ १२ ॥ एकोपिलंकांकृतवान्विहस्तांकीशोनुभूतंसकलैःपुरस्तात् ॥ सपारयेदब्धिमथापिकीशैर्महीध्रतुल्यांगतयाविभंगैः ॥१३ ॥ मृद्दीतनौयाकु

चयोरमृद्वीतन्वीमनोजोल्लसनेप्यतन्वी ॥ धन्योजगत्येनमपास्यनान्योयस्याहृतातन्निकृतिर्विमृग्या ॥ १४ ॥ वीराःपुर-
स्तात्धृतशस्त्रधाराःकृत्वाक्रुधंतेपिशठाःप्रकृत्या ॥ कृत्योपमादेहगयाविकृत्याकृत्यानिनैजान्यवदन्निकृत्या ॥ १५ ॥ जित-
त्रिलोकीगतजंतुजातस्तेजोनकिंनौषिविभिषिनैजं ॥ अस्तंनरक्षोनिकरोप्यवाप्तएकोपिलोकंप्रणयेत्सशोकं ॥ १६ ॥ श्रु
त्वैतदुद्वृत्तवचोविभीषणोविज्ञायसर्वानमनीषिणोपितान् ॥ अवारयज्जाल्मतयाकृतोद्यमान्हंतुंद्विषःपारगतानुदन्वतः ॥
१७ ॥ ततारसिंधुंशतयोजनायंततताडलंकामपियोद्वितीयकः ॥ ददाहशूरंप्रतिजंबुमालिनमक्षंजघानापिसहन्यतेपरैः
॥ १८ ॥ तीर्णोनयावत्तरसासरस्वान्लंकाप्लवंगैरवरोधमाप्ता ॥ शरैर्नतस्यापिचितंसमस्तंसीताप्रदेयारघुनायकाय ॥
यस्मिन्दिनेशोकवनेप्रविष्टासीतासशोकापतिदेवतासा ॥ प्रादुर्भवत्येवचदुर्निमित्तंजानीहिसीतामयिदेहितस्मै ॥ २० ॥
रमणीमणिंसमहरंवनतोहंनचतांविहातुमपिवाप्रभवेयं ॥ अनुजोयथासशयनाद्बहिरीयात्कुरुताशुतद्भवतिनोहितकारि
॥ २१ ॥ सविजहारवनेरघुनायकोवनितयानिजयापतिदेवया ॥ किमितितामहरोह्यसुहारिणींतदपितेरिगणंविधमाम्यहं 

॥ २२ ॥ तदनुरावणीयांविसदृशींसुवर्णांकौंभकर्णींवाणीमाकर्ण्यप्रस्फुरमाणोपदेशधोरणींविद्वद्भिरनिवारणीयामायत्यांत
दात्वेपिकल्याणकारिणींनीतिसरणीमनुगतांविभीषणःसभ्यानामभ्यर्णेवर्णयामास ॥ विभीषणाज्जातुविभीषणस्त्वंयथा
र्थनामासियतःस्वजातेः ॥ भीतस्ततस्तद्गणनाप्रशस्ताभीरुष्वितोनोकुणपाशमध्ये ॥ २३ ॥ ज्वलत्प्रतापिकृतसन्निधानेप्रभू
तवित्तीकृतजीवनाशे ॥ रामेनिदाघेनहिमेघनादोनुश्रूयतेदृश्यतयाभ्युपेतः ॥ २४ ॥ अमित्रतोनैवभयंममास्तिमित्रापदे
शात्सहजाद्यथेदं ॥ येष्वानुकूल्यंयदितेविरुद्धास्तदाकिमन्यत्धृदयेपिकुर्मः ॥ २५ ॥ चतुष्पदींगंतुमथापितेगतिर्दोष्णां-
विधातुंयदिमूढविंशतिः ॥ कृतिःप्रनष्टाक्षिगयाश्रियैधितागतायुषःसंतिहिलक्षणानिभोः ॥ दुर्वर्णभूषांश्रवणेदधामितदाकुबे
रानुजतांधिगस्तु ॥ समुद्रसंख्यैःसचिवैःसवित्तैरितीवरामंशरणंजगाम ॥ २७ ॥ ततोवानरेश्वरःसुग्रीवोंबरांतरचरमाशर
वरमवलोक्यतारहनूमत्प्रमुखान्व्यूढोरस्कान्सेनापरिवृढान्नूनमयंक्रव्यादोरावणदायादउदन्वद्यादइवतीरचरान्स्मां-
ज्जाठरवैश्वानरस्वाहाकारपराधीनान्विरचयितुमायातोविमृश्यतामित्यभिधाययावत्तिष्ठतितावत्सर्वैपिसुषेणादयोहन्यता-

मयंनिपात्यतांधरण्यामितिससंभ्रमाःपरस्परमभ्यवदन् ॥ अहारिसीताविपिनेचरंतीवरीयसारावणनामकेन ॥ भ्रात्रानि
रुत्थाविविधैर्वचोभिरुक्तोपिहातुंनशशाकतांयतः ॥ २८ ॥ विहायसर्वंवनितासुताद्यंतस्यानुजस्त्वांशरणंप्रपन्नः ॥ धिक्कार
वाक्यैरधिकंप्रतप्तस्तस्येतिरामायनिवेदनीयं ॥ २९ ॥ शठाप्रकृत्यास्तितुयातुजातिस्तत्रापिनाम्नैवविभीषणोयं ॥ किंकिं
नकुर्यादितितद्विमृश्यवध्योस्त्विवतिप्राहमतंकपीशः ॥ ३० ॥ मतंगृहीत्वासतुरामचंद्रःसैन्यस्यदृष्ट्वाविमतंतदानीं ॥ विभी
षणंतत्रमतंचकारयतःशरण्योरघुवंशजातः ॥ ३१ ॥ चतुर्भिःप्रधानैर्युतंसाधनैर्यंदशास्यानुजंराममाप्तंशरण्यः ॥ प्रभू
तैर्विरुत्थैर्निरुत्धंप्रबुत्धंप्रदायाभयंयुक्तमेवाकरोत्तत् ॥ ३२ ॥ ग्रस्तोसियेनत्वमुदारसत्वमुक्तोसितस्मादभिधेहिसत्वं ॥ स
त्वंविजानीह्युदितंतदीयंनिरस्तमग्रस्तमपीहराम ॥ ३३ ॥ गंभीरवाक्यानुगतार्थविज्ञोरामःपुरोलक्ष्मणमाहतुष्टः ॥ देयंकि
मस्मैपरितुष्टतायांलंकाधिराज्यादितरन्मयेति ॥ ३४ ॥ ततस्तुतस्यानुपदंसलक्ष्मणोलंकापदेतंतरसाभ्यषिंचत् ॥ तीर्णोसि
सद्योविपदांत्वमर्णवंतरामसर्वेवरुणालयंकथं ॥ ३५ ॥ विपत्प्रसंगेसतिजातुराज्ञोयःसंग्रहीरत्नचयेनराज्ये ॥ ऋतेनिबंधाद



थवोपवेशात्साह्यंनदत्तेइतिलोकवादः ॥ ३७ ॥ मंत्रंगृहीत्वाथविभीषणात्सस्वकार्यसिध्यैकिलरामचंद्रः ॥ सिंधोस्तटेशुद्ध
तयोपविष्टोबभूवचित्तैधितकृत्यचिंतः ॥ ३८ ॥ सिंधोस्तटेत्वंरघुराजसैन्यंशुकाशुगच्छप्रियसंदिशाद्य ॥ सुग्रीवमेतत्किल
तत्तथात्वंयथामुयाःसुंदरवाक्फलंतत् ॥ ३९ ॥ रामस्यभार्यापल्हतामयेतिनार्थस्तवस्यादथवाप्यनर्थः ॥ भ्रात्रासमोवालि
सुल्हत्तयात्वंजहीहिरामंस्वपुरंप्रयाहि ॥ ४० ॥ वालीहतःसंयमिनींप्रयातोमदर्थमित्येषतवाप्यनर्थः ॥ अभूत्सुल्हत्सोपि
पुलस्त्यपुत्रजानीहिरक्षोसुहृदस्मितेद्य ॥ ४१ ॥ पुराद्विनिष्क्रम्यगतःसचैकःसपुत्रमित्रंपुरतोपिदक्षः ॥ अद्यास्मिनि-
ष्क्रामयितुंशुकत्वांब्रूहीतिगत्वावचनंमदीयं ॥ ४२ ॥ जटायुषंत्वंव्यदधागतायुषंसमायुकंचोरसमंधृतायुषं ॥ त्वांतद्यसुं
कारयितास्मिसांप्रतंतत्कर्तुमीशोस्यपियत्तुसांप्रतं ॥ ४३ ॥ पौलस्त्यसंदेशहरःशुकस्तदारामीयसेनासमवेतजित्वरैः ॥
इतस्ततःसंचरकारितांगतोबत्धोनुकिंताद्दशवाक्यवत्तया ॥ ४४ ॥ ततोंगदात्युच्छ्रितबाहुपंजरस्थितोविपक्षःक्षणतस्तदाशु
कः ॥ रामेतिमाधुर्यमयाक्षरोदयान्मुक्तोभवत्स्वैरचरःपलाशिषु ॥ कोदंडकोटद्यामाधिरोप्यमौर्वींशरंजवेनप्रतिमोक्तुकामं ॥

रामंसुमित्रातनयोन्यषेधीन्महात्मनानिद्दशमत्रकार्यं ॥ ४६ ॥ शत्रुंविनान्यस्यनचोपसर्गोभवेद्विधेयंकृतिनातथेति ॥ बाणै
र्विमुक्तैरघुवीरसद्योनिर्हेतुकंजंतुविहिंसनंस्यात् ॥ ४७ ॥ सलक्ष्मणवचस्तथ्यंपथ्यमित्यवगम्यसः ॥ तथाचकारनयथावृ
थालोकेभवेत्कथा ॥ ४८ ॥ अहमपिचनदीनःसूरतःसागरस्त्वंकुलभवकटुतेमेयद्वधूराहृतेति ॥ मृगयदिशरिपोर्मेनागरंमा
र्गमाशुविषिणमपिभवंतंहिंसितुंनाहमीहे ॥ ४९ ॥ पारावारत्वांब्रवीम्यद्यमार्गेलंकायामेवाहिनीभ्योदिशत्वं ॥ कांतत्वंते
सुस्थमस्त्वन्यथाचेत्कीलालंतेनिःसरेन्निश्चिनुत्वं ॥ ५० ॥ भीतस्तदानींरघुनाथकोपाद्रंगादिभिःसिंधुभिरेषसिंधुः ॥ ब-
ध्वांजलिंप्रादुरभूत्पुरस्तात्क्षमस्वकिंमेपकृतंत्वदीयं ॥५१॥ किंत्वंसागरयत्रिरात्रमपिमेप्रायोपवेशंनवाजानीषेबतरीढया
नमनुषेजानीहिनैवास्यहो ॥ जन्यायोद्यतमीश्वरंत्रिजगतीक्लेशच्छिदंत्वामहंज्ञात्वास्वांप्रकृतिंभजामियदिनाजन्यंकथंनो-
त्पतेत् ॥ ५२ ॥ नोत्तमांगस्छितिस्तातभवितायादसांपते ॥ किंशिष्यतेकबंधेनतस्मान्मेमार्गमादिश ॥ मध्येकृत्य[3]रंजडे
ष्वपिद्दषत्प्रायैर्विधातुंक्षमंसंधिंतेनविधेहिसत्वरतयाप्यालिंनिबत्धांघनं ॥ तुभ्यंप्रोक्तमिदंतुयोजनशतेजानीहिभावीहितं

टीप १ युत्धाय २ उत्पातः ३ रलयोरभेदः ४ सखीं प० सेतुं ॥ छ ॥



सत्वंजातुनिगूहितामपिसखींप्राप्तोहितत्ध्वंसनैः ॥ ५४ ॥ शुष्कोयथास्यान्नममांभसौघोबाणस्त्वदीयोपियथानमोघः ॥
आभीरकाणांभवितानिरोधोनिदर्शयाम्यद्यतथाहिरोधः ॥५५॥ निशम्यसिंधूदितमेषवित्धमेनोविवृध्धंविदधेसमिध्धं ॥ च
कारसद्योपिवरैःसमृत्धंमरुंक्षणाद्रोगगणापवित्धं ॥ ५६ ॥ पराभवेयातुजनस्यहेतुंरघुप्रवीरस्यसुकीर्तिकेतुं ॥ पारंमहाब्धेः
पृतनांसनेतुंशिष्टोनलोथाशुचकारसेतुं ॥ ५७ ॥ ततःकपीनांचरतिस्मवारोनपस्पृशुस्तंतुयथाब्धिवारि ॥ आसादितस्ते
नपरोपिपारोनागण्यतापिप्रचुरोरिचारः ॥ ५८ ॥ ग० तदनुवृत्रारिप्रभृतयोंबरचरास्तारादिभिरासादितपरपारंविरचि
तस्कंधावारंरघुवीरंलंकानगरपरिसरेबहुवर्षविजिततर्षैरपितत्समयप्राप्तहर्षैर्महर्षिभिःसाकंनाकादुपेत्यतदात्वेप्यायत्यां-
चशुभकामुकैःपरमासनेविनिवेश्यावश्यंवश्यतामानीयपश्यतामस्माकंनिर्विश्यतामस्तोकभावुकःप्रभूततोकोविगतशोको-
मध्यमलोकइतिसुमंगलांवाचमादधानावरैर्वरैर्निर्मलांतरैर्वारिभरैरभिषेचयांचक्रुः ॥ प० वदन्ग्रहीतुंसहलक्ष्मणेनपश्यन्
सलंकांबहुभावयुक्तां ॥ अत्रास्तिमेप्राणसखीनिरुत्धारक्षोधिपेनेतिचचारदूनः ॥ तदनुसेनापालकेनकालेनेवनीलेनत्वया

टीप १ जययोरभेदः ॥ छ ॥

सहधृतांगदोभृशमहितांगदोंगदोवरीयसिसेनोरसिवृकेभ्यइवरक्षोभ्य :संरक्षितुंदक्षिणेपार्श्वेप्रवीरततीर्गाइवऋषभोवानर
र्षभऋषभोनामशृंगवान्स्थिरीकर्तुंभुवमिवशिखरीगंधमादनाभिधोवीरोन्मादनोयशःसंपादनायगंधमादनोवामेशुभेशु-
भलक्षणेनलक्ष्मणेनसहोत्तमांगेसहसाप्रतिवीरशरासारसासहोहंवेगदर्शीसुषेणश्चस्वधर्मदर्शिनौकृतरिपुपेषणौजांबवान-
पिससहायोभूत्वाविपक्षपक्षक्षपणायसेनाध्यक्षान्क्षानग्रेकृत्यकुक्षिरक्षणतत्परोलतागहनवनकदनेयूथपइवघनेजघनेपरे
भ्योवनेकृतघनदर्शनोविनैवाज्ञांस्पर्शनस्याप्यस्पर्शनःकृतप्राणस्पर्शनोविमर्शनोवनौकसामधिपतिरितिसेनापतिंसेनाव्यू-
हनेसीतापतिर्व्यादिदेश ॥ प० मुक्तःशुकोसौत्वदिभीतभीतोविलूनपक्षोविधृतैकपक्षं ॥ क्षोभाधिकोवक्षसिजाततक्षोर-
क्षोधिपंतत्क्षणतोजगाम ॥ ६० ॥ ग० आशराधिपतिरपिव्याकोशकृताक्रोशंशुकंवानरपंजरतोमुक्तमभ्यपृच्छत् ॥ प०
कथयकिमितिचित्तसंभ्रमेणासिकृत्तोरघुवरकपिसैन्येनाधुनाज्ञातवृत्तः ॥ यदसिभृशमरुग्णोरुग्णवद्दृश्यमानोविदलयसि
नितांतंमामकीनांतरंगं ॥ ६१ ॥ भागधेयंरूपधेयंनामधेयमपिप्रभो ॥ अभिधातुंविधेयोस्मिवैधेयस्यतवाग्रतः ॥ ६२॥



टीप १ दान २ ब्रम्हवंश्यस्य प० मूर्खस्य ॥ छ ॥

एकैककोप्यत्रकपिप्रवीरःपुरीमवास्कंदवतींविधातुं ॥ यन्मन्यतेचेतसिनान्यपक्षःसीताप्रदेयारघुनायकाय ॥ ६३ ॥ न-
ज्ञातवान्यच्छरपत्धतिंमेसतेनलंकांपरितःप्रयातः ॥ रघुप्रवीरस्त्वमितोविपक्षोनिर्गच्छमाप्राप्नुहिपत्धतिंमे ॥ ६४ ॥ वि
निर्धुतोभूच्छुकनामधेयोजाल्मेनरक्षःपतिनातदानीं ॥ छेकीकृतोयोपिभवेद्विमुक्तःस्वजातिजोधिक्कुरुतेतमाशु ॥ ६५ ॥ र
णाग्रयायीपरमत्रयुक्तोनसारणःकारणतांजगाहे ॥ शुकोपिवक्तुंचतुरोनकर्तुंशार्दूलएवप्रहितःसुखाय ॥ ६६ ॥ उत्प्लुत्य-
शार्दूलकएषगत्वागाढंगृहीतोपिपरैर्विमुक्तः ॥ उवाचतथ्यंवचनंयथासौसंमंत्रणायैवचकारवुद्धिं ॥६७॥ आहूयसर्वान
थमंत्रिणस्तान्संप्राप्तकालंस्वहितंसदःस्थितः ॥ चकारतैःसार्धमसौसुमंत्रंविसर्जयामासततश्चतांस्तान् ॥ ६८ ॥ विद्यु-
ज्जिव्हेनसाकंरहसिपरमसौमंत्रयित्वादुरध्वंपश्चाद्गत्वाप्यशोकाभिधविपिनमरंरावणोमोदमानः ॥ भर्तासुग्रीवमित्रंस-
किलविनिहतोराक्षसैःशस्त्रहस्तैःशेतेसीतेरणाग्रेशिरइदमधुनापश्यतत्कार्मुकंच ॥ ६९ ॥ तच्छिरःसमवलोक्यतत्धनु
र्जानकीह्यनपवित्धनिसर्गं ॥ जातसंभ्रमतयाविललापद्यांभुवंकरुणयादलयंती ॥७०॥ आयुस्त्वदीयंगणकाःसमग्रंप्रा

दुर्मनाग्रेशतशोनुयुक्ताः ॥ तत्तथ्यमेतत्पुरतोपिदृश्यतेयत्तन्नजानामिभवामिमूढा ॥७१॥ यावद्विलापंकुरुतेस्मसीतातावत्त्र
हस्तेननिमंत्रितोसौ ॥ जगामकर्तुंत्वरयानिगूढंकार्यंव्यलीकंव्यपहायतस्मात् ॥ ७२ ॥ आगत्यतूर्णंसरमासखीसासी-
तांसमाश्वासयदंतरंगा ॥ त्वंविप्रलब्धासिसखित्वदर्थंकीशैर्विकृष्टांनगरींनवेत्सि ॥ ७३ ॥ त्वंस्वापतेयंयदिदातुमीशास
स्यात्मकंमूल्यविहीनमद्य ॥ भवेस्तदागूढतराशुचर्यापत्युर्नवक्त्रीनरकेपतेयं ॥ ७४ ॥ पत्युर्गतास्याद्यदिपादमूलंसखी
भवेच्छूर्पणखेवजातु ॥ उपोपसर्गेणयुतंकृतंयदपोपसर्गेणयुतंतदस्याः ॥ ७५ ॥ यद्यंसिकाराक्षसजातिरुग्रातत्राप्ययं-
यातुपतिःप्रतीतः ॥ गत्वाविजानीहितदीयमंत्रंकर्तुंप्रवृत्तोस्तियदद्यतंत्रं ॥७६॥ गत्वापुरस्तस्यवरंददामिपरंक्षणंतिष्ठ-
सुखेनभीरु ॥ आगत्यतस्याःसकलंतदैवविनिश्चयंतस्यनिनायकर्णे ॥७७॥ मात्राबहूक्तोपिपितामहेनत्यक्तुंनतांत्वांसहते
दशास्यः ॥ ऊचेनवाच्योस्मितयायुगंवाजानामितस्याःपतिसंयुगंवा ॥७८ ॥ जानीहिसीतेजगतोस्यभव्यंपश्यामिनेत्रं
स्फुरतीतिसव्यं ॥बाहुश्चतेसच्छृणुभीरुनव्यंनेतात्वदीयःपतिरध्ययोध्यं ॥ ७९॥ येनाद्यसभ्योपिसुहृत्सुमाल्यवान्नि



माल्यवत्सोपिभृशंनिराकृतः ॥ मालांजपापुष्पमयींसमस्तकेकालेनकृष्टोविदधातिरावणः ॥ ८० ॥ अंभःसमानैःसरमा
वचोभिरशोकमूलंनियतंभजंतीं ॥ निर्वापयामाससमानयंतीनिवासदेशेनहिशोकतप्तां ॥८१॥ ग० ॥ तदनुपौलस्त्यो
पिशूरपौरस्त्यंबहुशःकृतहस्तंपूर्वस्यांद्वारिप्रहस्तंदक्षिणस्यांवीर्यवत्तरौमहापार्श्वमहोदरौसर्वकर्मस्वपाश्चिमंपाश्चिमायांमूर्तं
दुष्कृतभरमिववक्रकृतंशक्रजितमुत्तरस्यांदिशिनियतविहितशूरविशारणौशुकसारणौवितीर्णवीरपाणौनिर्णयेनशूरकर्मणि
पूर्णतयारणाग्रगण्यानधमर्णानुत्तमर्णमिवविवर्णांस्तिरस्कुर्वाणंगीर्वाणनिर्वापणमात्मानमतिजाल्मोमध्यमेगुल्मेस्वपक्ष्य
मारक्षदक्षमत्र्यक्षमपिविरूपाक्षंराक्षसमितिसेनापतीन्व्यादिश्यरभसावेशवशेननश्यतिकुलमितिनपश्यतिस्मकिंतर्हिश
र्मनिर्माणायएतर्हिबहुशोनुभूतचरमपिवरमंतःपुरमिति ॥ प० ॥ भूत्वामदीयैःसचिवैर्विहंगैर्लंकाविधानंपृतनागतांगैः ॥
यथाकृतंतैरभियातिराजाद्दृष्टंतथातन्मुखतःशृणुत्वं ॥ ८२ ॥ यथारातिकृतंसर्वंसंपातिरवदत्तथा ॥ प्रतियामद्विषोरामन
यामितियमंवयं ॥ ८३ ॥ आशरैःप्रधनेसार्धनभाव्यंवानरैर्नरैः ॥ सप्ततैर्विधिनाक्लृप्तान्गुप्त्यैसंज्ञास्तुनःसदा ॥ ८४ ॥ ज्यो

त्स्नाभरेद्रष्टुमनाःसरामःशृंगंसुवेलस्यजगामलंकां ॥ मंत्रंस्वषट्कर्णगतंविधातुंनिशामनैषीत्सकलांप्लवंगैः ॥ ८५ ॥ पुष्ये
णयुक्तेसतिकालयोगेग्गतिर्भविनीकिलकृत्यपूर्णा ॥ रामोहिपौष्यांकिलपौर्णिमायांकार्यविधातुंगतवान्सुवेलं ॥ ८६ ॥ सु
वेलनिष्ठःसतुरामचंद्रोनिरीक्षमाणःपुरमस्ततंद्रः ॥ आस्तेस्मयावत्प्लवगैःसवीरैस्तावत्प्लवंगाधिपतिःप्रतस्थे ॥८७॥ प्रासा
दसंस्थंनिजसैन्यदृष्टिंसकेकसीसूनुमुदारसत्वं ॥ दृष्ट्वागतोगोपुरमुच्चसंस्थंतस्थौक्षणंतत्रकपिप्रवीरः ॥ ८८॥ रामस्यनि-
र्धार्यतरस्यभार्याल्हतात्वयाराक्षसपाशहर्षतः ॥ अवाप्नुहित्वंफलमस्यपापेत्युक्त्वाकिरीटंशिरसोन्यपातयत् ॥ ८९ ॥ सु
ग्रीवप्लवगप्राग्र्यभवाव्यग्रोभविष्यसि ॥ विग्रोवाविगतग्रीवोदशग्रीवोब्रवीदिति ॥ ९० ॥ शक्तिंस्वकीयामपहाययावन्मा
याबलालंबनमेषकर्तुं ॥ शक्नोतितावत्सतुतेनयुध्वाकपिप्रवीरोपिजगामरामं ॥९१ ॥ ततोनिषिद्धःप्लवगाधिपेंद्रोरामेण
किंसाहसमीदृशंत्वया ॥ कृतंकपीशेनसतेतितेनप्रशास्यएषोस्तिमयेतिचोक्तः॥ ९२ ॥ इतोभियोगोस्त्वितिरामशिष्ट्याद्वंद्वा
निकर्तुंप्रयताःप्लवंगाः ॥ भवंतियावन्नियुयोजदूतंसचांगदंराक्षसराजमेतुं ॥ ९३॥ दातुंसमर्थोसिददस्वमह्यंसीतांमदी-
मपिराक्षसेंद्र ॥ द्विषेनदत्स्वाद्यविभीषणायलंकामितिब्रूहिनिशाचरेंद्रं ॥ ९४ ॥ तदांगदोरामवचोनिशम्यप्रणम्यपौलस्त्य
सदेशमागात् ॥ संश्रावयामासचतस्यवाक्यंनीतिंप्रशस्तामपिमर्मवाचं ॥ ९५ ॥ रेरेरावणभिक्षुकेणभवताविश्र्योटजंभि
क्षतामारीचंमृगतांतथागमयताल्लोकांतरंयत्धृता ॥ सीतास्नेहवताधवेनरहितापक्षीहतोगृध्रराट्तस्मादंगदइत्ययंप्रभविता
नाम्नार्थतस्तेंगदः ॥ ९६ ॥ यत्वंरावणनर्मदासरितिभोयुक्तःप्रहस्तादिभिःक्रीडंतंवनितासहायमगमोयत्धैहयाधीश्वरं ॥
युध्धेत्वांसबबंधतत्धृदिभवेच्चेत्साप्रदेयात्वयावत्धोन्मोचयितास्तिमेपरिवृढःश्रीरामचंद्रोविभुः॥ ९७॥ योबाहुकारांतरतो
निविष्टंत्वांमोचयामासघृणीमदीयः ॥ तातोथतस्यास्मिसुतःसदक्षोजानीहिसीताप्रभवेप्रदेया ॥ ९८ ॥ रक्षोनागंकैकसेयं
वनोपांतप्रचारिणं ॥ वालीयथार्थनामाभून्यवध्नात्स्वांयतस्ततः ॥ ९९ ॥ दाराःपरेषांनगृहेषुकार्यावारामधूनामपिनैवसे-
व्याः ॥ धाराःशराणांनमृगेषुपात्याःकाराप्रदाश्चात्रभवंत्यमुत्र ॥१००॥ यदेकेकुंडलस्त्वयापुरारणेजितोभवत्ततःस्मयाद्र
सातलेगतंत्वयाजिगीषुणा ॥ चिरायतत्रपातितात्द्विषायदेककुंडलात्पराभवाद्विदेहजांददस्वभोप्रियस्वनो ॥ १ ॥ नला

टीप १ रलयोरभेदः २ कुबेरः ॥ छ ॥

दिभिःसेतुरपित्रचीर्णस्तेनैवपाथोधिरपिप्रतीर्णः ॥ तवानुजःसोपिचतंप्रपन्नःकिंमृग्यतेदेहिसतींसवर्णी ॥२ ॥ यस्त्वंकुबे
रंवरुणंचसौरिमिंद्रंतथाचंद्रमसंचसूर्यं ॥ युध्धेजयस्त्वंसगतोह्यनेहाकिंमृग्यतेरावणदेहिसीतां ॥३॥ नादित्यात्कृचछ्रूमा
प्तानचपवनगतेर्नापिवाकालिकातःसैन्यास्तेनापिचत्वंक्कचिदपिविषयेप्राभवात्तेहिमान्याः ॥ यस्मिन्कालेत्यगात्सद्रुततर-
मधुनाजालमतांसंजहीहिप्राप्तोलंकासमीपंदशरथतनयःकिंविमूढोसिपश्य ॥ ४ ॥ सौरीसुनीलौघवतीवाहिनीयमुनातथा
॥ त्वामुल्लंघ्यसमुद्रंसागमितावसतिंस्वकां ॥ अनुलोमवर्णजनितोस्यपिलंकांनिजधर्मतोपिपरिपालयरक्षः॥भवतिक्रमेण
सुफलंकृतिजातंनचविक्रमेणभविताकिलसर्वं ॥संध्यांकर्तुंप्रवृत्तंममपितरमसौत्वंग्रहीतुंप्रवृत्तःसत्वांकुक्षौग्रहीतुंसमुदचर
दथोत्वांगृहीत्वास्वकीयं॥ धामाप्यप्राहधात्रीर्ममतनयवरस्योपरिष्टाच्छयालोर्बध्नीतेमंदशास्यंतवमनसिनतत्स्छानमापेति
चित्रं ॥अंगदस्यवचनंभिदुरंतत्प्रापकर्णपथमेतदतीव ॥प्राप्नुयाद्यदिहृदंतरमाशुप्राणपंचकमिदंहिनगंतृ ॥ ग्रहीतुकामान
थरावणाज्ञयारक्षोवरान्पार्श्वचरान्सकीशः॥प्रासादमग्र्यंपरिगृह्यदोर्भ्यामुत्प्लुत्यभंक्त्वाशुजगामरामं॥तदनुतत्रगताहरि

टीप १ मेघनादात् ३ सूर्यस्य ५० शूराणां ७ नवं ॥ ७ ॥

---

राक्षसाअधिभुवःसमवाप्यतुशासनं ॥ समपहायतदोधिभुवंशुचंप्रतिभुवोप्यभवन्विजयेभटाः॥ १० ॥ स्वोस्थ्यायलोके
प्रभवंतिनित्यंद्वंद्वानियत्संजनयंतितुल्यं ॥ द्वंद्वानितेषांहरिराक्षसानामुक्तप्रतीकाशतयाबभूवुः ॥ ११ ॥ पाशीपुरोगामित
याभविष्यज्जयोपिमेतत्क्षणतोभविष्यत् ॥ सपाशिनाविंद्रजिदाशुकृत्वाजिगायमत्वेतिनुराजपुत्रौ ॥ १२॥ अनागसंब
ध्यामिवेतिमत्वानागेंद्रमेतंबतलक्ष्मणंतं ॥ ततोगरुत्मानभिगत्यतत्रचकारसंसित्धिगतंमहात्मा ॥ १३॥ पदातिरासीत्पुर
तोभियातेर्नागाश्रयोदाशरथिर्बभूव ॥ यावत्प्रयात्येषवरोरथोस्यदृष्ट्वाजहात्तंसतुनागपाशं ॥ १४ ॥ अत्रांतरेपुष्पकमध्य
रूढांविधायसीतामपिराजपुत्रौ ॥ न्यदर्शयत्सत्रिजटापितत्रप्रत्याय्यतत्वंसरमाबभूव ॥ १५ ॥ अपेतबंधौसनिशम्यबंधूउ
पागतश्चेतसिदुःखसिंधुं ॥ चकारधूम्राक्षमृतेजयोनभवेन्ममेतिप्रसभंसबुध्धिं ॥ १६ ॥ धूम्राक्षमेनंहनुमान्निरीक्ष्यसंप्राप्तवं
तंरणशीर्षमुग्रं ॥ संप्रेषयामासरथाक्षहीनंकालासहस्तूपयमंविधाय ॥ १७ ॥ ततोंगदोवायुसुतेनदर्पात्धतंनिशम्याशरव-
र्यमुग्रं ॥ ईर्ष्याभरेणापिसवज्रदंष्ट्रंचकारखड्गेनजवाद्विशीर्षं ॥ १८॥दृष्ट्वाहनूमानपिवालिसूनुंप्रोत्साहनायाहतवज्रदंष्ट्रं ॥

टीप १ नायकस्य २ मनोव्यथानातां ३ लम्बकाः ४ स्वस्थतायै ५० सर्गस्थितत्वाय ६ अनागसंबध्यमितिएकपदंपदद्वयं ६ गरुडः ॥ ७ ॥

अकंपनंतत्रससांयुगीनःपित्र्याविहीनंव्यदधान्निजेन ॥१९॥ नलादिषुप्रोत्थतकृष्णवर्त्माप्रवर्धमानःकिलनीलसंगात् ॥ शू
राग्र्यरक्षोगणनाप्रशस्तस्ततःप्रहस्तःसमभूद्विशांतः ॥२०॥ नीलेनतस्यापिवधंनिशम्यकृतंविहस्तःसमभूद्बलेन ॥ शोका
नलेनापिसराक्षसेंद्रोरामेणयोत्धुंप्रययौजवेन ॥ २१ ॥ विभीषणादर्शिततत्प्रधानंरक्षःप्रधानंविगतप्रधानं ॥ यांतंतुहंतुं-
निजबंधुमग्र्यंसोप्यार्थयत्स्वंरिपुनाशनाय ॥ २२ ॥ सलक्ष्मणोभ्रातृगृहीतशिष्टिर्यावद्धनूमंतमथावलोक्य ॥ योत्धुंसमि-
च्छत्यपिराक्षसेशंनियुत्धमासीत्कपियातुराजोः ॥२३॥ संग्रामेपावमानिःप्रबलतरमसौमुष्टिनाताडितःसन्संमुह्यन्नूजत्रु
देशेझटितिघाटितवान्मुष्टिनाराक्षसेंद्रं ॥ तुष्टावाढ्योदशास्यःकपिवरमथसप्राहकिंनौषिमांभोमुष्ट्यामिताडितोपिप्रचरसि
समरेग्न्हीतएवास्मितेन ॥ २४ ॥ अग्नेरापःसमभवन्निनितिश्रुत्यर्थतोग्निजः ॥ रामावतारवेलायांनीलतामगमत्किमु ॥२५
आग्नेयांशंजृंभितंसंप्रगृह्यनीलंधूमैर्वाशिरावस्थितंतं ॥ रामःप्राप्तोयुत्धदीक्षांदशास्यंमेध्यंसंचस्कारमत्वासमंतात् ॥२६ ॥
आग्नेयनीलोपरिरावणेनप्रयुक्तमाग्नेयमपीहशस्त्रं ॥ वृथाभवत्सोपिनचापदुःखंधी रेवगच्छत्यजयस्यपुंसः॥२७॥ नीलं

टीप १ प्राणराहितं २ डलयोः ३ रलयोरभेदः ॥ छ ॥

विसंज्ञंपतितंविहायजगामसौमित्रिमुदारसत्वः ॥ योत्धुंततःसोपिचसांयुगीनोरक्षोधिपंवेगवशेनधीरः ॥ २८ ॥ ना
सित्वंसुकृतिवरःपरंस्मयेनसंप्राप्तोप्यधिकृतिमंतरारणाग्रं ॥ पश्यामोविकृतियुतंत्वदीयदेहंतत्सत्यंप्रकृतिरवेहिदुस्त्यजे
ति ॥ २९ ॥ पश्यत्वंदशवदनाद्यलोकासित्धमस्त्येकोनधिकतरःशतान्नवेति ॥ संख्यातेवदनगतादशोन्मितास्तेतस्यामेश
तगुणितेत्यवेहिरक्षः॥ ३० ॥ व्यपातयच्छक्तिमथोदशास्योममास्त्ययंराघवतःप्रशास्यः ॥ ततःसुमित्रातनयोविसंज्ञःसस्मा
रतत्रात्मनएवधीरः ॥ तमेःपरंशामयितुंनवेत्तिवायूद्भवेस्नेहभरेणजन्मी ॥ ततःपरंतेनभवेद्धृशार्तोविसंज्ञतामेतिनाचित्रमत्र
॥३२॥शक्तःस्थिरांतोलयितुंयएकस्तंराघवंवोढुमनास्तदानीं ॥ आसीत्धनूमानपियुक्तमेतद्यद्योगिवर्यःसतुवायुभूतः ॥
३३॥ ततोनिजाभ्याशगतंदशास्यंदृष्ट्वासरामोभ्यवदत्तदानीं ॥ ममास्तियोविप्रियकृच्छरीरीसकेनकुत्रापिगतोविमोक्ष्यते।
३४ ॥ यत्कामरूपोभवतिप्रसंगेवातात्मजस्तत्परमार्थरूपं ॥ यतःसुचक्रिप्रविलोक्यरक्षोरामस्यचक्रीसबभूवसद्यः ॥३५
चक्रेयग्रतोराक्षससंघधुर्यःसस्माररवैरस्यपुराभवस्य ॥ दृष्ट्वाहनूमंतमथोदशास्यओंशीर्युतंतत्रमुखेनचक्रे ॥ ३६ ॥ दत्ताशि

टीप २ हनूमति प० दोषे १ प्रेमभरेण प० द्रवत्द्रव्यभरेणं ३ तमःपररावणं प०परंतमोमोहं ४ हिताशंसाप० अहिदंष्ट्रा ॥ छ ॥

षंगूढपदे नरामोविलोक्यरक्षःपरमेणकाशं ॥ तंविन्हलंविक्रमतश्च कारसद्यःसुखंसोस्तियतोनरेंद्रः ॥ ३७ ॥ मंत्रास्त्रतोमौ
लिमथास्यपश्यतोमांसादनागस्यजहारदूरतः ॥ निर्यापितःस्थानमसावपिस्वकंनरेंद्रवर्योयतएषराघवः ॥ ३८ ॥ तदनुसं
प्राप्तापूर्वपराभवतापः पापः कौणपाधिपस्ततंतपोपिसमापयतःप्रस्तुतंदुष्कर्मकर्षककृतस्ववर्ष्मक्षेत्रविपद्बीजपरिवापेनपु-
रुषकापेयतस्तेभयमितिप्रजापतिशापेनापियदिकश्चित्प्रबुद्धः प्रबोधमापितःप्रतिकुर्यात्तथायतितव्यमितिनैवमांपरिहा-
स्यतिदुरितायतिरितिकृतमतिर्नियतंस्वपितिनजागर्तिजागरितोजातुचित्स्यादप्यरातीन्निहंतेति कुंभकर्णमंतःकरणाभ्यर्ण
मुपानीयतमुत्थापयितुंरक्षोगणानन्वादिदेश ॥ मनसिवक्ष्यमाणंविमृशतिस्मच ॥ प॰ ययागृहीतःसुहृदोहिनिद्रयाकार्यं
विधातुंक्षमतेनजातुचित् ॥ तयासमुक्तोविदधीतनैवचेत्तांप्राप्नुयाद्दीर्घतमांसपूरुषः ॥ ३९ ॥ ग॰ तदनुगृहीतादेशारक्ष
स्पशास्तस्यवासदेशमागत्यकृतास्थानासास्यनिर्गतश्वासविसरविवशाःकथंप्रविशामेतिकृतविमर्शास्तिरश्चीनेनपार्श्वात्ये
नदेशेनकृतप्रवेशाः परस्परंकृताश्वासागृहीतावेशाःक्रमेणविरचिततदीयदेहस्पर्शास्तद्देहेप्रासादिप्रहारवारणायुतसंचार-

टीप १ निषवेषः ॥ छ ॥



णादिनामहताप्रयत्नेनतंबोधयामासुः ॥ तदनुबहून्मांसराशीनाशितोद्विसहस्रसंभृतकश्यकलशान्प्राशितःकिमर्थमहंप्रबो
धितइतिकृतानुयोगःप्रधानप्रकृतिभिःसुकृतिनासुगृहीतनामधेयेनरक्षःपतिनाभियातिसमभियोगायेतितन्नियोगंश्रावितो
रक्षःपतिसदनमानीयतस्मैदर्शितस्तेनसबहुमानंस्पृष्टःसुखशयनंकुशलंपृष्टोनिर्दिष्टप्रकृतकार्यःक्षणमासांचक्रे ॥ विज्ञापि
तस्त्वंरघुनायकायप्रदायसीतांसुखमाप्स्यसीति ॥ नतन्मतंमेव्यदधास्तदस्तुमामद्यहत्वाभिहनिष्यतित्वां ॥ विज्ञायतत्वं
तुतदामहोदरःसकुंभकर्णंवचसातिरस्कृतं ॥ चकारकिंजन्यजयेनवोभवेत्स्याद्धचनानःकुलदैवतंयदि ॥ यस्यास्तिबाव्होरुप
सर्जनंमहत्ससांयुगीनोभवितारणाग्रणीः ॥ यःक्वापिभोक्तुंयततेनिरंतरंयुंजंतियोग्यानाहितंमहोदरं ॥ तदनुनिर्भर्त्स्यतंमहो
दरंवरंसमरंमन्वानोदशग्रीवेणरचितभूषणवर्णनःकुंभकर्णोगृहीतसांग्रामिककरणःसमुल्लंघ्यलंकावरणंकृत्वानिरावरणंनि
र्याणपणंविधायशोणितपारणंशूराणांपरायणंकृतलक्षणंलक्ष्मणेनसहसमरभुविकृतावतरणंरघुवरेण्यमधृतरणरणि-
कःक्षणेनारण्यसद्मभिःसंस्त्यंविधातुंरक्षोजातिंविहातुमभ्यगच्छत् ॥ अहंखरोनास्मिखरःप्रकृत्यानवाविराधोस्मिकृतापरा

धः ॥ नवाकबंधंस्मरयत्समूर्धाततोनवारीभवितुंसमर्थः ॥४३॥ खरंप्रकृत्यापिकबंधमुग्रंकरोम्यहंत्वापिविराधमद्य ॥ आस्से
नवारीभवितुंसमर्थस्तवापिवारीभवितुंनिहन्मि ॥ ४४ ॥ यदातुरक्षोवधिषंखरंतंतदाविराधोपिनचासयोसौ ॥ नवाविराधो
पिखरोबभूवनैवंकबंधःकिमपूर्वमेतत् ॥ ४५ ॥ यःप्रापशूरःसमरंविधातुंमयाकृतांतंसचनापगोचरः ॥ दशोरभूत्कोवदया
तुपाशजानीहितद्वत्त्वमपीहतादृशं ॥ ४६ ॥ लक्ष्मणोहिकृतवान्कृतहस्तःकर्णनासविधुरांभगिनींमे ॥ सोदरोहमपिताद
शरूपःस्यांतथाससमभूत्कपिमुख्यात् ॥ ४७ ॥ कपिप्रवीरैःपरितःपुरींतांग्रहीतुकामैःश्रुतिनासहीनं ॥ दृष्ट्वानुरक्षोशकु-
नंनिवृत्तंनकुंभकर्णस्याभियेतिमन्ये ॥ ४८ ॥ ईप्सितःसमितिसंस्थितिलाभोदिव्ययोषिदुपभोगसमेतः ॥ हारिचंदनसुमो
द्भवगंधोरामचंद्रकलहेनाहिसर्वं ॥ ४९ ॥ छिन्नेबाहौभुजगसदृशेदक्षिणेयोविहस्तोवामेपश्चाज्झटितिविकलःकुंभकर्णोबभू
व ॥ अंघ्र्योश्छेदेकरसदृशयोर्जाज्ञिवान्योविपन्नश्छिन्नेबाणैःशिरसिजगृहेगंडितासून्मुमोच ॥ ५०॥ शुचानुजस्यातित
रांविदूनंपौलस्त्यमाहात्रिशिराःकिमूनं ॥ राजन्विधेयोस्मितवाद्यनूनंरक्षोपिकर्तुंजगदेषहीनं ॥ ५१ ॥ रामाद्भयंतेयदिया

टीप १ रलयोरभेदेबालीभवितुं प० अरीभवितुं २ अशिरःकरपादःशरीरभागस्तद्वत्ता ॥ छ ॥



तुधाननरांतकस्त्वंकुरुवीरपाणं ॥ नरांतकोयद्यहमस्मिदानंकरोमितस्येतिविधेहिमानं ॥ ५२ ॥ ततःसचतुष्पादोविश्रव-
स्तनयःकृतविविधवीरवादान्विरचितसिंव्हनादान्विधृतपादान्नरांतकादीन्दत्ताशीर्वादान्विधायसमरायविसर्जयामा
स ॥ नरांतकोराक्षसराजमूर्तिजोनकेवलंयातुजनोपितद्वत् ॥ इतीवमत्वैवसवानरांतकोबभूवयुद्धेकिलवानरांतकः ॥ ५३
लक्ष्मणेनसहसंगरमुग्रंसंविधायसहसाह्यतिकायः ॥ नामरक्षणपरोभुविसद्योब्राह्म्यशस्त्रविधितोपितथाभूत् ॥ ५४ ॥ यो
निवातकवचोप्यतिकायःसप्रवातकवचोहिबभूव ॥ तत्रवातउपजापकरःसन्निर्ययौतनुतएवनिगूढः ॥ ५५ ॥ देवांतकं-
तावदसौहनूमान्जघानवज्रोपममुष्टिनातं ॥ संतापतःसोपितुवातभूतोबभूवचस्तुल्यतयादिविष्ठः ॥ ५६ ॥ प्राप्तंत्रिशीर्षं
पवमानसूनुःसंग्रामसीमोपरिराजमानं ॥ खड्गेनसद्योविदधेविशीर्षंरराजरक्षोव्रजमूर्धपादः ॥५७॥ तदनुनिर्धूतवैरिव्रजेया
यजूकेआर्त्विजीनेरघुराजेहनूमत्प्रभृतिभिऋत्विग्भिर्वीरवादमंत्रेणसिंव्हनादवषट्कृतेनषडपिदेवांतकादीन्गृहीतप्रा-
णपंचकान्भूमिपिठराधिष्ठितदेहान्संतापतप्तान्क्रमशोनिर्वापितान्रणाग्नौहुतान्विश्रुत्यसजातीयनाशशंकितंचतुष्पादमा

टीप १ षष्ठीबहुव्रीहिः २ कायमतिक्रांतः ३ पंचमीबहुव्रीहिः ॥ छ ॥

त्मानंमन्यमानंस्वपितरंमेघनादोभिवाद्यवीरवादैराश्वासयामास ॥ विविधैराश्वासनैराश्वास्यस्वपितरंविश्वातिशायिभि
र्विश्वासपरैर्निपीतकष्टैरधिगतकष्टैरश्वासनैः सहरणसीमानमागत्यजयलक्ष्मीकामनः प्रकृत्याअवामनोभियातिशम-
नायोपासितदमुनाःप्रशस्तमनामेघनादनामादशवदनतनयोनिशाटनः कृतांतर्धानोधृतशरासनआवांपतितौविरचय्यग-
च्छेदयमितिकृतव्यवसायाभ्यांराजपुत्राभ्यांसहवानरान्शरासनेनविहितशयनान्विधायानुपदमेवलंकानाथपदाब्जयोर्नि
वेद्यस्वपराक्रमंकंचित्कालंसुखेनक्षपयितुंजगाम ॥ शुल्कीकृतप्राणतयाशयानावुल्काकरौराक्षसकीशराजौ ॥ वल्कान्वितौ
वीक्ष्यरघूत्तमौतौकल्काहतत्वादरुचावभूतां ॥ ५८ ॥ विभीषणोवीक्ष्यरणेविषण्णंकिमत्रकर्तव्यमितःशयानौ ॥ रघूत्तमौचे
दितिसंशयानंकपीशमाश्वासयदुत्तरेण ॥ ५९ ॥ तदनुहनूमतासहितोयातुराजानुजातःपंचाभिर्घटिकाभिरहः शेषेणवानरा
णांसप्तषष्ठिकोटीर्हतावीक्ष्यहनूमदनुयुक्तजांबवज्जीवितस्तदुपांतप्रदेशमागत्यकच्चिज्जीवत्यार्यइतिविश्रुतस्वत्तांतजांबव
दुदितहनुमज्जीवितकथःपरंविस्मयमापन्नस्तंतातकिमित्येकंहनूमंतमेवपृच्छसीत्यनुयुक्तेनतेनैवमुक्तआसीत् ॥ जीवन्-

टीप १ कल्कोस्त्रीघृततैलादिशेषेदंभेनिभितकेविट्किट्टयोश्वपापेचत्रिषुपापाशयेपुमारीति मे० ॥ छ ॥



किशोरःपवनस्यरक्षःसर्वान्परासूनपिचक्षणेन ॥ संजीवतोस्मान्विदधीतयस्मात्तमंजनासूनुमहंब्रवीमि ॥ ६० ॥ वचस्तद्द
क्षाधिपसंप्रयुक्तंनिशम्यपादौन्यपिपीडदस्य ॥ द्रोणंसमानीयतदीयवाक्याद्गतव्रणानाशुचकारसर्वान् ॥ ६१ ॥ सुप्तांश्च-
काराशुसतत्रबुद्धान्रक्षोधिराजात्मजबाणविद्धान् ॥ क्षिप्तानिरक्षांसितुयातुराजाज्ञयाविनांभोधिजलेहनूमान् ॥ ६२ ॥
जातकार्यःसहनुमान्तंद्रोणंद्रोणवत्तदा ॥ संस्थाप्यस्वस्थलेभ्यागाद्रामवीक्षणलालसः ॥ ६३ ॥ विमृश्यचित्तेकपिराड्विद
ग्धालंकांजनेयेनदिवेतिनूनं ॥ व्यदीपयत्सोपिकपिप्रधानैरुल्काकरैराशुतदानिशायां ॥ ६४ ॥ तत्रराक्षसप्रवीरेषुमैंद-
द्विविदांगदादिभिःशोणिताक्षयूपाक्षादिषुहतेषु ॥ वनौकसांशूरतरोधरेशोजन्यंपरित्यज्यदशास्यसूनौ ॥ कुंभेश्रुतौस्वर्ग
गतेऽनुपुत्रंसाह्यायसंप्रेषयतिस्मकुंभं ॥ ६५ ॥ हनूमतानिकुंभोपिसुप्रभोनिष्प्रभःकृतः ॥ प्रसभंभीःकृतपदारक्षःसभमु-
पाविशत् ॥ ६६ ॥ नाम्नापराक्रमितयाचखरंमदीयंवप्तारमाशुनिजघानभवानितोहं ॥ त्वांकेवलंकिलविधायखरंप्रतापैः
पास्यामितेरुधिरमद्यततोनिवापः ॥ ६७ ॥ नविकृतिंगमयेद्धतसंगतिःसहकृतासुजनैःप्रणिदर्शनं ॥ समभवद्रघुनाथशरा

टीप १ अनुजे २ कुंभकर्णे ॥ छ ॥

र्दितोनिमिषैनेत्रतयामकराक्षकः ॥ ६८ ॥ पित्रानियुक्तःसतुमेघनादोयुध्वाचिरंदाशरथिप्रकोपे ॥ सीतांस्वमायारचितांस
देशेहनूमतोहंतुमनाबभूव ॥ रेरेपौलस्त्यपुत्रक्कनुभवसिकथंहंस्यमंतुंस्त्रियंत्वंधर्मोनोसृष्टिकर्त्रीविहितइतिभृशंयासिदुष्की
र्तिमर्द्धां ॥ सूनोवायोःसमुद्रेवियतिविनिहतासिंहिकाताडकासाघोणायांहिंसितास्त्रीनभवतिविपदाग्रस्तकस्यैषधर्मः ॥
७०॥ मायाविदेहजाहत्याशप्तोहनुमतारणे ॥ राक्षसत्वाध्धृष्टरूपोबभूवेंद्रजिदेषयत् ॥ ७१ ॥ छद्मनापिनविगृह्यगर्हि
तंकर्मकार्यममुनेतिसांप्रतं ॥ यद्रघुप्रवरविक्रमाधिकोभूदपींद्रजिदसौनिराकृतः ॥ ७२ ॥ सजांबवान्दाशरथिप्रणुन्नःश्रु
त्वानिनादंकपियातुजातं ॥ गत्वाहतांरावणिनाशुसीतांव्यजिज्ञपद्दाशरथिंसपावनिः ॥ ७३ ॥ सलक्ष्मणस्तत्रशुचाग्रहीतं
निरीक्ष्यतप्तोविललापरामं ॥ धर्मेणराज्यंव्यजहामयोक्तःसरक्षतित्वामधुनापिधर्मः ॥ ७४ ॥ धर्मोपिनोरक्षतिनाप्यधर्मो
निहंतिजंतुंस्फुटमद्यपश्य ॥ हीनाभवामोधिगताविद्दृत्धिवयंपरेतत्रकुतःकृतांतः ॥ ७५ ॥ उत्तिष्ठशेषेकिमितोगृहीत्वाशु
चंसमुत्साहविभंगकर्त्रीं ॥ नीराक्षसामद्यविधातुमीशस्तवानुजःपश्यकरोतिलंकां ॥ ७६ ॥ अत्रांतरेतत्रविभीषणोपिवि-

टीप १ सुरमत्स्यावनिमिषावित्यमरः प० गतप्राणत्वात् ॥ छ ॥

धायगुल्मानियथास्थितानि ॥ दृष्ट्वाविषण्णंसतुरामचंद्रमुवाचनैतत्त्वयिवीरसांप्रतं ॥ ७७ ॥ तदनुदीनदीनयावाचाहतेंद्र
जितासीतेतिसौमित्रिणोक्तेनविभीषणेनापिवातोपियांस्प्रष्टुंनशक्नोतितत्रकोवास्प्रष्टुंप्रष्टुंप्रधर्षयितुंनिहंतुंवासमर्थःस्यात्दृ-
श्यमानेयंराक्षसीमायातोव्यर्थमात्मानंकदर्थयथोरावणात्मजोनिकुंभिलायांज्वलनंसमुपास्यसमाप्तकर्माधृतवर्माइंद्रजिच्छ
र्माभवेच्चेद्ब्रम्हदत्तवरेणकृतकर्मैवसंजातमद्यावधिनमैवभवेदितिविमृश्यरघुराजसुमित्रातनयमधुनैवतद्वधायनिरवधायाभि
धेहीत्यभिहितोनिश्चितमनारामोपिविभीषणेनसाकंसौमित्रिंविसर्जयामास ॥ तदनुमित्रानंदनःसुमित्रानंदनोपिशत्रु
नाशायगृहीतरामपादशतपत्रोहनूमतासपत्रःकुत्रास्तेदशवदनपुत्रइतिवित्रासयंच्छत्रुबलंविभीषणेनसत्रायत्रन्यग्रोधप-
त्रच्छायशीतलभूमितलेऽविलंबेनवृत्रारेरमित्रस्तत्राजगाम ॥ संपूर्यतेकर्मनयावदस्यतावच्छरैस्तीक्ष्णमुखैर्निहंसि ॥ य
द्येनमद्यत्वमुपात्तकीर्तिर्जयस्यलक्ष्म्यापिसमेष्यसीति ॥ ७८ ॥ तदनंतरंसमरधौरेणरघुराजावरजेनाशरराजानुजगिरंस्व
हितपरामुररीकृत्यपरिक्षिप्तैर्निरंतरशरनिकरैरंतरायेणवानरवरैःकृतारक्षक्षयःपरित्यज्यवैश्वानरपरिष्क्रियांपुरंदराराातिःप

दातिरग्रतोमारुतिभज्यमानांस्वजातिंदशासाक्षात्कृत्यारंनासीरपरिसरंसमयारथिरवरोभूत्वासारथेयत्रैषवानराधीश्वरानु
चरःसमीरकिशोरोराक्षसवरैः समरमातनोतितत्रनयरथमन्यथासर्वामपिपृतनांवैवस्वतपत्तनपथंनेष्यतीत्युक्तेनसारथिना-
पितन्निकषानीतोलक्ष्मणविभीषणावभिबिभावयिषूपराबिभावयिपुर्ददर्श ॥ आगच्छसीहवदलक्ष्मणधीररात्रौबंधेननाग
विहितेननिबद्धगात्रः ॥ आसीरितिस्मरसिनैवततोस्यन्हीणःसत्वांनयामियमगेहमहंशरेण ॥ ७९ ॥ पाटच्चरेणभवतारज
नीचरेणकृत्वाविगर्ह्यमपिकर्मवचोतिदूरं ॥ श्लाघ्यंत्वयैवकुलहीनसुशोभमेतत्सद्यःकरोमिसुतलंकुतलंविहीनं ॥ ८० ॥ य
द्दुष्टराक्षसविभीषणजातसंगरस्त्वंवक्षिपक्षसदृशंबहुतावदेव ॥ त्वांतंविभीषणमुभावपिहान्मिपश्यनोचेद्रणंत्यजासिजीवि
तकांक्षयात्वं ॥८१॥ जल्पाकजल्पसिनिहीनमुमूर्षयात्वंतातस्तवास्तिबतदुष्टतमोप्यहंवा ॥ योसून्जहातिनजहातिपरस्त्रि
यंयोयस्त्वांविहातुमधुनेच्छतिकिंब्रवीषि ॥ ८२ ॥ शूरोभवेहयदिवापिभवाद्यधीरःसंग्रामसीमनिमरिष्यसिपश्यतोमे ॥
मंदोदरीमपिनपश्यसिमेघनादनांतःपुरंयदिहिमांचतिरस्करोषि ॥ ८३ ॥ जल्पाकमेनंजहिमेघनादंजाल्मोपिभत्वासम



रेप्रवीर ॥ नलक्ष्मणास्त्येषदयांविधातुंपात्रंदशग्रीवसुतोहिहिंस्रः ॥ संतर्पयामिपललैरधुनाहविर्भिर्गोमायुपत्रिगणसंज्ञ
कदैवतानि ॥ एतस्यबाणकृतझंकृतिभीरणाग्निमुद्बोध्यमंत्रविसरैःपरिपश्यरक्षः ॥ ८५ ॥ वाचालवाचालमितोनवाचा
मूल्येनचेतुंघटतेयशोत्र ॥ शौर्येणचेदस्तियशश्चिचीषाभवाद्यवीरोनचतस्करःस्याः ॥८६॥ तदनुतावतिरोषणावाकृत्याभी
षणौरावणिलक्ष्मणौरणमूर्द्धनिपरस्परंबाणगणैःकृतव्रणावन्योन्यजीवनग्रहणकृतपणौभूमौराक्षसानामृक्षाणांवानराणा-
मंतरिक्षेयक्षादीनांस्वपक्षपरपक्षाणामीक्षमाणानांविहितनेत्रनिर्वाणौजिष्णूप्रतिक्षणंवर्द्धिष्णुगात्रसंशोषणंसंज्ञामोषणंय-
शःपोषणंप्रविदारणमातेनतुः ॥ चित्रंतदानींसमेरभवन्सरथोहनूमान्किललक्ष्मणस्य ॥ शिलांरथेपातयदिंद्रजेतुश्चकार
मोघामपितस्ययंता ॥ ८७ ॥ ततःसुमित्रातनयोपियंतुर्योग्योभवेदस्यहिदिव्यभोगः ॥ इतीवतंबाणगणेननुन्नंप्रस्थाप-
यमाससुखेननाकं ॥८८॥ रथिसारथिकर्तृत्वमभूदिंद्रजितस्तदा ॥ रथत्वंसारथित्वंचकपेःकिंचित्रमत्रहि ॥ ८९ ॥ तदनं
तरंगंधमादनादिभिःस्वर्गगतस्यसारथेर्जीविकासाधकमत्रानुपयुक्तामितिमन्यमानैःसंस्थापितेषुरथ्येषुप्रतियातेषुचस्वर्ग-

मार्गेशक्रजिदपियथापुरंबलमवस्थाप्ययथापुरमद्यगत्वारथमानयामितावदत्रैवयोद्धव्यमित्यभिधायक्षणेनलंकापुराद्रथ-
मानीयरथीशरनिकरैर्योद्धुंव्यवस्थितोभूत्पश्यतोलक्ष्मणस्य ॥ अनेनयोद्धुंकिलदक्षिणस्त्वंनतत्रकिंचिद्यपहीनमस्ति ॥
तथाप्यभीकःपुरमद्यगंताहासोभवेन्नात्रयशस्त्वदीयं ॥ ९० ॥ एनंनिहन्यामहमेववीरमूर्धन्ययद्येषनबंधुजातः ॥ द्रष्टुंनद्द
ष्ट्यानचहस्तकृत्यंशक्नोमिकर्तुंमनसाद्दुनोमि ॥ ९१॥ इतिब्रुवंतंसपितृव्यमद्धामुमोचशक्तिंदशवक्त्रपुत्रः ॥ मध्येच्छिनत्ताम
पिलक्ष्मणस्तंजातोस्यशक्तस्त्वमिहेत्यवोचत् ॥९२॥ संधायचापेशरमिंद्रदेवंससत्यसंधोयदिरामचंद्रः ॥ अनेनकुर्यामसुभि
र्विहीनमुक्त्वेतितच्छीर्षमपातयत्सः ॥९३॥ नकेवलंशक्रजितोवधेनशक्रःप्रहृष्टोभवदत्रचित्रं ॥ अपित्रिलोकीगतजीवसंघो
हिंस्त्रापदायत्सुखिनोभवंति ॥ ९४ ॥ तदनंतरंरुधिरक्लिन्नशरीरोविश्रब्धोविभीषणहनूमद्भ्यामवष्टब्धोलक्ष्मणोयत्रराघव
सुग्रीवौतत्रागत्यतमभिक्रम्याभिवाद्यह्रीणइवतदभ्यर्णेसुखमतिष्ठत्॥ करोमिनीराक्षसमद्यसर्वंपुरासुमित्रातनयाभ्यभा
षथाः ॥ तदद्यसर्वंकृतमेवमन्येयन्मेघनादंन्यवधीस्त्र्यहेण ॥९५॥ छिन्नस्त्वयादक्षिणबाहुरस्यहनिष्यतेयद्यपिमेदशास्याः



तथापिनात्यद्भुतमस्तिकिंचित्खंजस्यहंतानचवर्णनीयः ॥ ९६ ॥ सुषेणशल्यान्यपनीयसद्यःकुरुष्वसौमित्रिमुदारसौख्यं॥
जानीह्यहंरावणमाशुहत्वाततोविशल्योभवितास्मिधृष्टः ॥ ९७ ॥ सुषेणदत्तौषधिजातगंधःसनात्तगंधोभवदात्तगंधः॥ चि
त्रंनचेत्सद्भिषगौषधेनविचित्रवीर्येणकिमस्तिकार्यं ॥१९८॥ इतिश्रीमदभिनवरामायणचंपूकाव्येएकादशस्तबकः ॥११
॥छ॥ संश्रावितःपुत्रवधंप्रधानैःसीतावधंकर्तुमनाबभूव ॥ निवारितःसन्ससुपार्श्वनाम्नाप्रस्थापयामासचमूरणाय ॥१॥
सुग्रीववालिसुतदाशरथिप्रवीरैर्योधैर्महोदरमुखेषुहतेषुतत्र ॥ निश्चेष्टतामगमदाशुदशाननःसन्कोनाममूलबलहानिषुन
क्षिणोति ॥२॥ काननेदशरथोहिविनाशंश्रावणंरविजधामनिनाय ॥ पैतृकीमनुसरन्निवरीतिंसंगरेविचरतिस्मसरामः
॥३॥ ततःपरंक्रोधनिरीक्षणौतौबद्धादरौयुत्धकृतावभूतां ॥ अन्योन्यमुत्सादितसैन्यवीरौनिदर्शयंतौकृतहस्ततांस्वां॥४
सौमित्रिणाबाणगणैर्निरुद्धोरक्षोधिपःसंयतिशक्तिमुग्रां ॥ चिक्षेपतस्योपरिसोपविद्धस्तयापपाताशुमुमूर्च्छगाढं ॥ ५ ॥ ता
मापतंतींरघुराजसूनुर्निरीक्ष्यशक्तिंप्रहितांद्विषास्मिन् ॥ स्वस्त्यस्तुयस्मिन्प्रहितासितस्मैमोघाभवेत्यभ्यवदत्सशक्तिं ॥६॥ न

टीप १ श्रावणंशांविनारावणं प०बिशिष्टोनाशोयस्यतं ॥ छ ॥

चाप्यनेहास्तिशुचोविरुद्धैर्निपातनीयोस्तिपुलस्त्यसूनुः ॥ सुषेणतंतंकुरुयत्नमुग्रंजह्यादयंमोहमितोनुजोमे ॥ ७ ॥ हनू
मदानीतधराग्रभूतमहौषधघ्राणकृताभ्युपायात् ॥ यथासुमित्रातनयःसुबोधोबभूवविद्यास्यतथाचकार ॥ ८ ॥ ततःसुमित्रा
तनयोविबुद्धःसंबोधयामासरघुप्रवीरं ॥ संधात्वदीयाविहतायथानसंधायबाणंजहिशत्रुमुग्रं ॥ ९ ॥ सौमित्रिवाक्याद्विर
थःकृतोपिततोदशास्यःसरथोबभूव ॥ युद्धेप्रवृद्धःशरवर्षमुग्रंचकाररामोपरिरावणोपि ॥ १० ॥ रामोऽरथोग्रेसरथो
दशास्योदृष्ट्वेतिखिन्नःप्रबभूवशक्रः ॥ पुनश्चदृष्ट्वाविरथंदशास्यंजहर्षजन्येसरथंसखिन्नः ॥ ११ ॥ रथेनहीनःसरथेनयोद्धुंर
घुप्रवीरःकुशलोनचस्यात् ॥ समातलिंस्वीयरथंसदेशंसंप्रापयामाससतस्यशक्रः ॥ १२ ॥ सज्जंरथंस्वःपतिनाविसृष्टमा
रुह्यतंमातलिदत्तहस्तः ॥ रघुप्रवीरःसचचक्रतुस्तज्जन्यंजयेप्सूपरमेणधाम्ना ॥ १३ ॥ ततोदशास्यःपरिगृह्यशूलंचिक्षेप
तस्योपरिवेगतोसौ ॥ महेंद्रदत्तांविससर्जशक्तिंयथासखिन्नोपिनिकृत्तशूलः ॥ येनस्मपाटच्चरवत्कृतोसिस्मराशुतंतुक्षणम-
घकंतु ॥ गंतुंसदेशंशमनस्यमंतोर्निराकृतौत्वंविनियोजितोसि ॥ १५ ॥ यत्त्वंराघवयोत्धुमिच्छासिमयासंग्राममसीमन्यहो

टीप १ कामं ॥ छ ॥



अंतश्चेत्कुरुषेविवेकमधुनानोवाभवेरग्रतः ॥ संजातोस्यनरण्यभूपतिकुलेजेयोभविष्यस्यतोनोचेत्त्वत्कुलनायकंसपदिवाभे
त्स्यामिपश्याहतः ॥ १६ ॥ यध्धर्मेणपुरस्करोषिसततंत्वंमार्गणंराघवयद्दस्यून्विनिहंसिमार्गणपुरस्कारेणसद्घातुकान् ॥
तेनत्वंक्षितिशितोभवन्नपिनमांहंतुंसमर्थोभवेस्त्वत्तःकिंभवितापिपूर्वजतयानब्रह्मणोतिक्रमः ॥ १७ ॥ कृत्वापिदुष्कर्मपरंपरां
त्वंवाचाटवाचापितिरस्करोषि ॥ एतर्हिकृत्यैवभवंतमित्थोऽवाचंदशास्यास्मिकरोमिबाणैः ॥ १८ ॥ दृष्ट्वातिमुग्धंस्वपतिंनि
यंतारणादपोवाहरथेनदक्षः ॥ पृष्टोपिसप्राहतथाप्रवृद्धष्टोददौस्वहस्ताभरणंयथास्मै ॥ १९ ॥ अत्रांतरेकुंभभवोजयायदि
देशरामायसपत्नपाशात् ॥ आदित्यपूर्वंहृदयंरणाग्रेजगामचांतर्धिमथापिसद्यः ॥ २० ॥ यथायथासन्मुखतामुपेत्यरक्षः
पतिर्बाणगणैर्विकारं ॥ चकाररामस्यशरैस्तदानींतथातथासौविमुखोबभूव ॥ २१ ॥ संस्मारितःसारथिनासरामोविनान
विध्यस्त्रमयंविजह्यात् ॥ असूनितिप्राज्यतरेशरासेसंधायबाणंप्रविमुंचतिस्म ॥ २२ ॥ जगद्गुरौदाशरथौनिरीक्षितेस्वीये
प्रधानेविलयंगतेसति ॥ विहायदारादिपुरांतमप्यलंविदेहताहंःसमभूत्ससांप्रतं ॥ २३ ॥ कपिप्रवेकेनहतेमहोदरेपार्श्वेग

टीप १ सूर्य २ आचारेण प० धनुषा ३ नाणं प० याचकं ४ वेदस्य प० ब्राह्मणः ॥ छ ॥

देनापिहतेमहादिमे ॥ यद्रावणोराघवतोविदेहतामवापचित्रंनहितत्रकिंचन ॥ २४ ॥ शंभोरग्रेदशास्योहुतभुजिहुत
वान्मस्तकान्पंक्तिसंख्यांस्तेनासौभूमिजातंनिरतिशयसुखंप्राप्तवान्मंतुहीनः ॥ रामस्याग्रेरणाग्नौदशदशकमितान्मस्त-
कान्मंतुमान्सन्हुत्वाप्रापोपरिष्टाद्भवभवनसुखंयुक्तमासीत्तदानीं ॥ २५ ॥ दशाननोदाशरथेःसदेशेरणाग्निमुद्बोध्यशतेन-
मूर्ध्नां ॥ कृत्वाहुतीनांशतकंजुहावप्रजापतीशंचरमेणमूर्ध्ना ॥ २६ ॥ राजाधिराजाद्दतरामचंद्रादुदारवीर्यात्परदत्तराज्या-
त् ॥ लंकाधिपेनेहदशाननेनप्राप्तापराभूतिरितीवयुक्तं ॥ आजिंकर्तुंरावणेनह्याजेरामोबभूवहि ॥ प्राजितामातलिर्यत्रन
जितस्तत्रकोभवेत् ॥ ततोरणाग्रेपतितंशतांगात्किरीटहीनंशकलीकृतांगं ॥ रक्षःपतिंतत्रविभीषणोसौव्यसुंददर्शापिभृशं
शुशोच ॥ २९ ॥ रामायवैदेहसुतांप्रदायसुखेनराज्यंकुरुमित्रभावात् ॥ पुत्रादियुक्तस्त्वमिदंमयोक्तंयन्नाग्रहीस्तस्यफलं
हिभुंक्षे ॥ ३० ॥ विभीषणंप्रतिरामआह ॥ शौर्येणसर्वामजयत्त्रिलोकींवीर्येणभाग्यंबुभुजेसमस्तं ॥ सचेद्रणाग्रेभिमुखो
शयिष्टकथंसशोच्योभवितापिवीरः ॥ ३१ ॥ त्वंराजराजानुजयातुराजंसंप्राप्तकृत्येनसभाजयेथाः ॥ स्वर्गंगतस्यास्तिनज-

टीप १ एकपदं प० पदद्वयं २ दशरथात् ॥ छ ॥



न्मबंधुरामुष्मिकंयःकुरुतेसबंधुः ॥ ३२ ॥ तदनंतरमंतःपुरान्निर्गच्छंतीनामुत्तरपुरप्रतीहाराद्घोरांसमरभुवमवतरंतीनामदृ
ष्टचरीणांसुत्द्वद्वरैर्बहुशोनिवारितानांरावणांतःपुरनारीणांहतंपतिंविचिन्वंतीनांकाचिदेनंपरिगृह्यरोदःक्षोदकरंरुरोदकाऽचि
दुत्कंठयोपकंठमागत्यकंठमवललंबेकाचिद्व्रणाशिरसिरजसापरिवृतावमृजावपिविराजमानौभुजावितस्ततः कृत्वाशुचाभू
मावात्मानंपरावव्रृते ॥ काचित्तस्यसुखसदनंवदनमवलोक्यमुमोहधूलिधूसरंतस्यमुखपरिसरमश्रुविसरैरमार्जयत् ॥ ए
वमार्तास्ताःसर्वाअपिपर्यदेवयन् ॥ योराजराजंतरसाविजित्यव्ययोजयत्संयतिपुष्पकेण ॥ जग्राहलंकामपिरत्नचित्रांस
चाद्यशेतेनिहतःपरेण ॥ ३४ ॥ यएषमृत्योरपिमृत्युदातासनाप्नुयान्मृत्युमपीहजातु ॥ अभूमयेनाधिकभाग्यभाजःस-
एषशेतेनिहतःपरेण ॥ ३५ ॥ सुरासुरेभ्योपिचपन्नगेभ्योभयंनचावापसुखेनयेभ्यः ॥ ददौहिनित्याभयमुग्रवीर्यःसएषशे
तेनिहतःपरेण ॥ ३६ ॥ स्वतेजसानिर्जितवैरिचक्रंत्रैलोक्यराज्याप्तिविशेषवक्रं ॥ यस्यापिपुत्रोविजिगायशक्रंसएषशेते
निहतःपरेण ॥ ३७ ॥ यश्चाप्यवध्योभवदद्ययावत्सदेवतायक्षकराक्षसानां ॥ बभूवयश्चाक्षिगतोनरेणसएषशेतेनिहतः

परेण ॥ ३८ ॥ विभीषणस्त्वाभ्यवदद्विभीतोरामायवैदेहसुताप्रदेया ॥ नचाशृणोस्त्वंबतकामकारात्ततोद्यशेषेनिहतःप
रेण ॥ ३९ ॥ दिष्टस्यचित्रागतिरस्ति दृष्टायदागएकोप्यकरोःस्मयेन ॥ फलंत्रिमिभुंज्यतएतदीदृक्प्रजाभिरस्माभिरपि
त्वयापि ॥४० ॥ सप्रेमदृष्टापिनचोपभुक्तासीतात्वयावैरिजनार्तिदातः ॥ नार्तिःपरंत्वामभिरक्षतिस्मपरैःकृतासाप्यसुहा
रिणीति ॥ ४१॥ सत्यस्त्वदीयावयमद्यनत्वांप्रब्रूमनिंदामनचार्यपुत्र ॥ सर्वंजगच्चेष्टयतेतुदिष्टमतिक्रमस्तस्यभवेन्नुके-
न ॥४२॥ तत्रसर्वासांवरीयसीसुंदरीमंदोदरीनसुरानासुरास्त्वांमारयितुंचतुराःकिंतत्रवनचरैःसहितोवनचरोनरःकिंतर्हि
दिनकरसुतःसोपिबहुधापराजितोनवापुरंदरःसचमेघनादेनजितोऽजितः परंदामोदरःसएवनरोभूत्वात्वाममारयद्यदावी-
र्यप्रखरःखरःसपरिवारः समरेरामशरासारैर्वैश्वानरइवनिर्वापितोयदावानरेणप्रधार्षितालंकातदारामोनमानुषइतिनिश्चि -
न्वंत्यामयाबुत्धिमद्वरेणदेवरेणबोधितोपिनपतिव्रतांतामत्यजआस्तामिदंत्वंगतोवीरलोकंगमितास्मिकर्तुंनिरयावलोक-
मितिवहुतरंपर्यदेवयत् ॥ रूपेणबुध्यानकुलेनतन्वामयाधिकावापिसमासकामा॥ तथापिकामान्नतवासबोधोनचापराध्नो

तिभवान्स्वदिष्टं ॥ ४३॥ वीराशंसनमा त्वाहमवीरास्मिपरैःकृता ॥ वीरकंयामिशरणंधीरैकंकुरुभाषणं ॥ ४४ ॥ वीरायत्र
सहस्रशःप्रतिगृहंलंकानगर्यांसदात्रैलोक्योद्भटकालकूटसदृशोयत्रास्त्ययंरावणः ॥ कालःसोपिगतोभवद्यदधुनाकीराःस
हस्राधिकालंघंतेभवनानिनिर्भयतयाकाकायथेच्छंबकाः ॥ ४५ ॥ व्यत्यस्तवस्त्राभरणासपत्न्यामंदोदरीतत्रवचःप्रसारैः॥
संबोधितापिस्तनयुग्ममाराान्निषिंचतिस्माश्रुजलैःप्रभूतैः ॥ ४६ ॥ अत्रांतरेदाशरथिर्विभीषणंप्रोवाचधीरःपरिसांत्वयता
मयं ॥ योषिज्जनःसंस्क्रियतामितोप्यसौनभूरिशोकःकिलभूतयेभवेत् ॥ ४७ ॥ अदूषयद्यःकुलमस्मदीयंतंसंस्करोम्यद्य
नपारदारिकं ॥ वीरोरणाग्रेपतितोविपापःसंस्कार्यएषोस्तिमतंविभीषण ॥ ४८॥ रामस्यवाक्येनविबोधितःसनूससंस्कृ
तंतंव्यदधाद्दशास्यं ॥ स्त्रीषुप्रविष्टासुपुरंकृतोदोजगामरामंतुविभीषणोपि ॥ ४९ ॥ यत्तामसंरूपमभूद्दशास्यंहंतुंरणाग्रेर
घुराजसूनोः ॥ अदृश्यमप्येषचकाररामस्तदैवतन्मातलिनापिसार्धं॥ ५० ॥ विभीषणेनेदमकारिसर्वंयद्रावणोगाद्यमराज
धानीं ॥ तस्मात्त्वयालक्ष्मणपौरवर्गैर्लंकापदेसावभिषेचनीयः ॥ ५१ ॥ घटेनसंगृह्यसचार्णवार्णःपीठेनिविष्टंप्रविधायरौ

क्मे ॥ विभीषणंतंरभसेनमंत्रैःसमभ्यषिंचद्रघुराजसूनुः ॥ ५२॥ उपायनानिप्रतिगृह्यपौरैर्दत्तान्यसौराघवयोःसमीपे ॥
व्यधाद्व्रतौस्वीकुरुतःस्मतस्यचित्तानुरोधेनरघुप्रवीरौ ॥ ५३ ॥ ततोहनूमंतमुदारसत्वंरामोवदत्प्रांजलिमांजनेयं ॥ गत्वा
भिधेह्यद्यविदेहकन्यामस्माभिरास्तेकुशलीकपीशः ॥ ५४ ॥ आदीनवंयोप्यददात्सतुभ्यंजगामवैवस्वतराजधानीं ॥ वि
भीषणस्यानुमतेनसद्योविज्ञाप्यसर्वंत्वरयैहिवीर ॥ ततोहनूमानभिगम्यलंकांराजाज्ञयाशोकवनास्थितांतां। प्रणम्यसर्वंरघु
राजदूतोनिवेद्यपश्चात्पुरतःस्थितोभूत् ॥ ५६ ॥ श्रुत्वातदीयंवचनंतुभूजाबभूवबाष्पैस्वरुद्धनेत्रा ॥ व्याहर्तुमैषानशशाककिं
चित्प्रमोदभारेणहिसन्नकंठी ॥ ५७ ॥ यदासदुष्टात्युपसृष्टदेहाद्दष्टामयासीद्भवतीसुवक्री ॥ श्रुत्वाद्यसर्वंशुभशंसिसीते
सानंदमुद्वीक्ष्यनचब्रवीषि ॥ ५८ ॥ आख्यायतेयत्कपिवीरचारुपूर्णाननकंतत्सदृशंनचैव॥ नैंद्रंपदं वैधमथास्यतुल्यंकिंवेति
मुग्धास्मिनचब्रवीमि ॥५९॥ योयंत्वदीयंपदपंकजंश्रितोनपारमेष्ठ्यंपदमेषइच्छति ॥ अतर्जिषुस्त्वांप्रतिराक्षसस्त्रियःक्ष
णेनतास्ताअभिहंतुमिच्छति ॥६०॥ श्रुत्वासहासंवदनंविधायनोक्तंत्वयानश्रुतमंततोमया ॥ विधेयताकारयतीहसर्वंन

टीप १ क्लेशं २ सीता ॥ छ ॥



चापराध्नोतिजनोविधेयः ॥ ६१ ॥ श्रुतंत्वदीयंहृदयप्रमोदकरंवचःसंदिशदेविमह्यं ॥ संदर्शनप्रश्नपदेभिषेच्याःकपेकिम
न्यध्धवयातुकीशाः ॥ ६२ ॥ विदेहराजन्यजयोदितंयत्संश्राविताेभूदपिराघवस्ततत् ॥ हनूमतातत्रविभीषणोद्रागाज्ञापि-
तःपंक्तिरथात्मजेन ॥६३॥ संस्नाप्यसीतांप्रमदाभिरेषसद्यःसुगंध्यद्भिरनात्तगंधः॥ आरोप्ययानंशिबिकांतदानींसमान
यद्राघवपादमूलं ॥६४॥ उत्सारितान्कंचुकिभिःस्वयोधान्विलोक्यसध्यानमुपागतोपि॥ किमर्थमेतत्क्रियतेद्यरक्षोविभी
षणंचेतितिरश्चकार ॥ ६५ ॥ यानंविहायपदसंचरणेनतावच्छीघ्रंप्रयाहिसुहृदोप्यवलोकयंतु ॥ तांत्वामितिप्रवदराक्षस
नाथसीतांस्थानेगुहागहनमस्तिनसंप्रतीदं ॥६६॥ छायामिवस्वामपितामुपेतांमध्यान्हकालेस्वपदोपकंठं ॥ क्रमेणवा-
चःसतुवन्यवृक्षवत्तिरश्चकारात्ययतोदिनस्य ॥ ६७ ॥ छायेवयद्यप्यसियत्रकुत्रगच्छेहवैदेहिपरानुकूला ॥ सदेशवर्तीकि
ललक्ष्मणोयमन्योपियेनेच्छसिसंगमर्हं ॥ ६८ ॥ सायेप्रगेवापरिदृश्यमानांच्छायामिवस्वामवगच्छमात्वं ॥ मांमध्यम-
न्हःपरिदृश्यमानांशपेपुरस्तात्तवरामपश्य ॥ ६९ ॥ विहायचिंतांकिललक्ष्मणत्वंचितांविधेह्याशुपतामितत्र ॥ पश्यंतुस

टीप १ शिबिकोपर्याच्छादनं ॥ ज ॥

वेंकपिराक्षसामामग्नौप्रवेक्ष्यामिहिपश्यतोस्य ॥ ७० ॥ रामादृतेहंपुरुषस्यकस्यसप्रेमवृत्तिर्मनसापिगात्रं ॥ यद्यस्पृशंवन्हिर
पिप्रसह्यसंपश्यतस्तेकरुतादगात्रां ७१ अग्नौपतंतींरघुराजकस्माज्जानन्नपापांजनकात्मजांत्वं । उपेक्षसेरामजगत्प्रसूति
स्त्वत्तोस्तिशंभ्वादयआहुरेवं ॥७२॥ जाताब्धिजापूर्वमसौतुभूजाधुनाधुनानापिकरौस्मरक्षसा । नीताहिलंकामितिवात्वती
यंभूतंगताप्रादुरभूत्ततःसती ॥७३॥ रामेयंतावदासीद्दशमुखनगरप्रांतभागोप्तवित्ताशोकाख्यायांतुवन्यांसततपरिवृता-
राक्षसाभिःपवित्रा ॥ अंकेनादायसीतांसपदिधृतवतींप्राग्यथाभूषणाद्यंतामेतांकूकुदोग्निस्त्वहमपिचभवंस्तेददेत्वंगृहाण
॥७४॥ जानामिशंभ्वादयएवमेवसतीमपापांजनकात्मजातां ॥ तथापिलोकानुसृतिर्विधेयेत्युक्तातयासोप्यभवत्समेतः॥
७५॥ राक्षसेंद्रविहितात्युपसर्गंरात्रिसुप्तजगतामपिराम ॥ सौखशायनिकतात्वयिदृष्टातच्छमेनमृडइत्यवदत्तं ॥ ७६ ॥
प्राप्यराज्यंसुहृद्युक्तइष्ट्वाक्रतुशतेनच ॥ संस्थाप्यवंशंनंदित्वास्वंस्थानंपुनरेष्यसि ॥ ७७ ॥ पितात्वदीयोपिविमानसंस्थ
स्त्वांद्रष्टुमुत्कःप्रतिभातिपश्य ॥ भ्रात्रापिसत्राकुरुतत्प्रणामंवध्वेतिचोक्तःप्रणनामरामः॥ ७८ ॥ तमंकआरोप्यरघुप्रवी

रःकृत्वापुरोदंतमथापितेन ॥ शशाससौमित्रिविदेहपुत्र्यावेनंयुवांसंभजतंसदेति ॥ वनप्रयाणेममकोपयुक्तस्तदाशपःकेक
यराजपुत्रीं ॥ पुत्रेणसार्धंभवतात्वदुक्तंमिथ्येतिचोक्तोह्यवदत्तथेति ॥ ८० ॥ समंसपुत्रेणविधायवाचंसर्वेषुपश्यत्स्वमरेषुत
त्र ॥ विमानसंस्थःसजगामलोकंशक्रस्यहर्षेणयतःकृतार्थः ॥ ८१ ॥ दृष्ट्वात्वयारावणमुग्रवीर्यंहतंजगत्स्वास्थ्यमवापयस्मा
त् ॥ तुष्टोस्मितस्माद्वृणुयत्तवेष्टमितींद्रऊचेरघुराजसूनुं ॥ ८२ ॥ तुष्टोसिचेद्देवददस्वमह्यंमत्कार्यहेतोःकपयःप्रमीताः ॥ त्व
दंधसातेप्यमृताभवेयुस्तथेतिसप्रोच्यययौस्ववासं ॥ प्रस्थानकालविधृतोध्धवयोगभाजःसुप्तोत्थिताइवतदाकपयोविरेजुः
॥ व्यंगायआसतजनेरपितेपिसांगाःसंग्रामशस्त्रनिहताःकिमुतेशुभांगाः ॥ ८४ ॥ नद्यःप्रसन्नसलिलाअनुकूलगंत्र्योप्या
सन्नलोकपरिपालनजागरूकाः ॥ वृक्षाःफलैरपिदलैरपिदृष्टिहृष्टाःपुष्णंतिसौख्यमपिकिंपुनराशुभोगात् ॥ ८५ ॥ तदनु
तत्रतांरात्रिमतिवाह्यव्युत्थितंप्रगेरामंविभूषणभूषितोविभीषणोपिसुखेनतेक्षणदाक्षणदादुष्कर्मभीषणक्षणदाचराणांनाशे
नहतेनचराक्षसपाशेनतत्रैवकंचित्कालंगृहीतसभाजनेनत्वयासभाजनेनसहवस्तव्यमित्यवादीत् ॥ रघुपतिनाचसखेकृत

मतिर्भरतोविधृतमदर्थव्रतश्चतुर्दशसुशरत्सुसमतीतासुयदित्वंवनवासादनुपागतःस्यास्तदाजातवेदसमेवप्रवेक्ष्यामीतिकृ-
तप्रतिज्ञस्तद्यदितत्रमयानगतंभवेत्तदासप्रतिज्ञांपूरयेत्तद त्याहितंभवेत्परिवाद पात्रताप्यंगीकर्तव्याभवेदपिचसंजातका-
र्यस्यानवस्थानमेवश्रेयसेतत्सभाजयसर्वान्स्वविभवेनतेनैवसर्वापिमदीयासत्कृतिर्भविष्यतित्वद्यशसासहप्राप्तराज्यत्वा-
दित्युक्तःससर्वान्सभाजयामास ॥ संपूजितेसर्वजनेसरामःप्रस्थापयास्मानितिनैजवासं ॥ उक्तस्ततःपुष्पकमानिनायत
त्राधिरोहंसचकारतेषां ॥ ८६ ॥ स्थितोविमानेनुजनुस्वयोषित्समेतपार्श्वःपरिगंतुमुत्कः ॥ कृतंभवद्भिर्ममकार्यमुच्चैर्यांतेति
वक्तुंकिलकालएषः ॥ ८७ ॥ रामोक्तमादृत्यततःसमस्ताद्रष्टुंपुरेत्वामभिषिक्तमंजः ॥ मनोस्मदीयंत्वरतेप्रमाणंभवानिति
प्रांजलयोभ्यवोचन् ॥ ८८ ॥ समंजसंप्रोक्तमिदंभवद्भिर्नशिष्यतेनुग्रहकार्यशेषैः ॥ क्लिष्टामदर्थेस्वपुरेकुटुंबैः संयोक्ष्यथा
त्मानमितीवनोक्तं ॥ ८९ ॥ तदनुतेषुसर्वेषुपुष्पकमध्यारूढेषुसंचरत्ययोध्याभिमुखंपुष्पकेरामोविदेहनंदिनीमंकमध्यारू-
ढांप्रति वैदेहिदेहिलंकायांचक्षुःपश्यवैरशोधनमायोधनमत्रशेतेप्रेतोलोकविरावणोरावणोत्रविवर्णः कुंभकर्णोत्रहनूमदादि



भिर्वीरैर्निहताःप्रहस्तादयोत्रनिहतोदरदर्यामंदोदर्याशोच्यत्रायमनुत्तारःपारावारोत्रत्वत्प्राप्तिहेतुर्निबद्धःसेतुरत्रहनूमत्सु
खायगृहीतनाकोमैनाकोत्रत्रैलोक्यपावनंपापप्रशमनंमहातीर्थंसेतुबंधाभिधंयत्रमयानिहतोवाल्याभिधःकपिःसेयंकिष्किं-
धेतियावन्निदर्शयतितावत् ॥ आस्तामिदंराघववीरसर्वाःकपिस्त्रियस्त्वत्रमयासमेताः ॥ गच्छंत्वयोध्यामितिमेस्तिकामो
रामोपिचोमित्यवदत्ससीतां ॥ ९० ॥ सुग्रीवसर्वोपिकपीशयोषिद्गणस्तुतारामुखएत्वयोध्यां ॥ उक्तःससर्वाअपियोषित
स्तास्ताःपुष्पकंसंघशआनिनाय ॥ ९१ ॥ तदनुपुनरपिमनुजाधिपःसीरध्वजराजकन्येअत्रायंगिरिवरऋष्यमूकोत्रस-
मागतंप्लवगपतिनेयंपंपात्रत्वदर्थेविलापोत्रनिरीक्षितचरीशबर्यत्रकृतोविच्युतदेहबंधःकबंधोत्ररक्षोधिपेनप्रधनेवधमापित
स्तातजटायुरत्रदृश्यतामियंगोदावरीतीरेचास्याविशालापर्णशालाऽत्रत्वंत्वद्दतात्वद्दत्तापयुतायातुपतिनासंत्याजितपथिकलो
कश्रमोगस्त्यशरभंगयोराश्रमोत्रायमत्रिःसत्रिणामग्रणीरत्रनिहतोविराधोयंचित्रकूटश्चित्रकूटोत्रप्रसादयितुंशुभरतोभर
तोप्यागतएषाचित्रकाननायमुनोल्लोलभंगागंगात्रायंभरद्वाजाश्रमोयत्रप्रव्होगुहस्तदिदंशृंगवेरपुरमियंसुखधानीममपि

तूराजधानीसपापैर्दुरवापाकिंबहुनाऽहमहमिकयापश्यत्सुकपिराक्षसेषुबहुनापुण्यनिचयेनपुनरागतासीतिसानंदमुत्का
विरराम ॥ ततःसरामोनियतंववंदेमुनिंभरद्वाजमथाशुहृष्टः ॥ अनामयप्रश्नवचःपरोमुनिर्वृक्षान्ससद्यःफलिनांश्चकार
॥९२॥ ततोहनूमंतमुदीक्ष्यरामोगत्वागुहंत्वंभरतंप्रयाहि ॥ प्रब्रूहिसर्वंकिलजातमात्रंविज्ञायतस्येंगितमित्युवाच ॥ ९३
ततःससंदेशहरोहनूमान्गुहायसर्वंविनिवेद्यपश्चात् ॥ गत्वासमग्रंभरतायवृत्तंनिवेदयामाससचासहृष्टः ॥ ९४ ॥ जीवं
तमानंदउपैतिलोकेगाथावतेयंप्रतिभातिसत्या ॥ मन्वब्दमेतस्यममापिकष्टंसंगम्यतेसोपिमयेतिरामः ॥९५ ॥ कुत्रासी
त्कपिवरवानरैरसंगैःसंगोयंपुरुषवरस्यचित्रकारी ॥ दुष्टोसौकथयकथंहतोद्यशेतेदुष्टेस्यान्नरहरिसंगतिर्नमोघा ॥ ९६ ॥
अरण्यवासादिपुलस्त्यसूनुरक्षोवधांतामवदत्कथांतां ॥ यथासकीशोभरतस्तथासौमुदब्धिमध्येभ्यधिकंममज्ज ॥ ९७ ॥
भवंतुसिक्ताःपुरिराजमार्गाःकिरंतुपुष्पाण्यपितत्रतत्र ॥ धूपास्तथामंगलदीपिकाश्चसर्वंपुरंकाहलनादयुक्तं ॥ ९८ ॥ विद्व
न्वदत्वंपरमार्थयुक्तंत्वयातुकापयगाचित्तवृत्तिः ॥ संसादिताकिंनुरघुप्रवीरोनाद्यापिदृश्योभवतीहकस्मात् ॥ ९९ ॥ रक्षःक्ष



योवानरतःश्रुतोनकदापिपूर्वंभवताततःसः ॥ भ्रातस्तुकापेयतयातदस्तुपरंतुसद्यःपरिपश्यरामं ॥ १०० ॥ फलानिभुंक्ते
कपिसंघएषउद्धूतिमप्येतिरजोविदूरे ॥ विमानतःपश्यकपिप्रवीरैःसमुत्तरंतंरघुराजमेनं ॥ १ ॥ भारद्वाजमुनिप्रभावतइमे
वृक्षाःसुमैःसंयुतादृश्यंतेफलभारनम्रशिरसःस्वच्छायसौख्यप्रदाः॥ पांथानामपिनित्यनैजवसुभिःपाथेयमातन्वतेदत्तस्तस्य
मुनेर्वरोमघवताशुद्धंतपःकुर्वतः॥२॥ हत्वारावणमाप्यपुष्पकमसौसीतानुजाभ्यांयुतःसुग्रीवेणविभीषणेनचपरंसंस्तूयमानः
पथि।रामोद्येतिजनाःप्रसन्नमनसोवाहेभ्यउत्तीर्यतेदृश्यंतेप्रयतास्ततःकलकलोप्यत्राशुसंश्रूयते॥ ३॥ समातृकोमात्यजनैः
प्रसन्नोरामंववंदेपरिपूर्णमोदः॥ रामोप्यवातारयदप्रमत्तःसतद्विमानंभुवितूर्णमुत्कः॥ ४॥ रघुप्रवीरोपितदाविमानेहस्तेन-
धृत्वाभरतंनिवेश्य ॥ अंकेविवृद्धप्रमदाश्रुपूर्णोगाढंपरिष्वंगमदात्सतस्मै ॥ ५॥ सलक्ष्मणंचापिविदेहजातामासाद्यसद्यः
प्रणनामहृष्टः ॥ सुग्रीवरक्षोधिपतीससैन्यौस्तुत्वापिगाढंपरिषस्वजेच ॥ ६ ॥ शत्रुघ्नकःसोपिजवेनसीतांसौमित्रिमुच्चैरभि
धानमुक्त्वा ॥ पपातभूमौप्रणमन्जनौघेतौचाशिषःसंददतुःप्रसन्नौ ॥७॥ रामोपिमातृःक्रमशोवसिष्ठंप्रसन्नधीःसंप्रणना-

मसर्वान् ॥ तत्पादुकाभ्यांभरतोपिपादौसंयोजयामाससराघवस्य ॥ ८ ॥ निर्यातितंराज्यमिदंत्वदीयंनिग्राह्ययोग्यापि
मदीयमाता ॥ संभावितायत्किलतेप्रभावोवक्तुंनशक्योस्तिचतुर्मुखेन ॥ ९ ॥ तातस्ययत्कोशगृहेषुवित्तंत्वत्तेजसातद्दशसं-
ख्ययाधिकं ॥ विभीषणाद्यास्तुनिशम्यवाक्यंतस्याश्रुपूरंमुमुचुर्मुदाहिते ॥ १० ॥ आसाद्यतावद्भरतेनसार्धंतदाश्रमंपुष्प
कतोवतीर्य ॥ आज्ञापितंतत्धनदंजगामरामोप्ययोध्याभिमुखंप्रतस्थे ॥ ११ ॥ गृहाणराज्यंसकलंत्वदीयमद्याभिषिक्तंगुरु
भिर्जनौघः ॥ संपश्यतुत्वांप्रमदेनयुक्तःसूतादिभिर्वाद्यकरैःसमीड्यं ॥ १२ ॥ प्रेमाश्रुपूर्णोजगृहेसतस्यवाक्यंतदावाक्यवि
दांवरिष्ठः ॥ गुरुंनिषाद्यप्रथमंतदग्रेतदाज्ञयासौनिषसादरामः ॥ १३ ॥ तदनुवृत्त्रघ्नसमस्यशत्रुघ्नस्यनिदेशेनप्रभूतंवेतन
मार्पितैर्नापितैःसुखविहितश्मश्रुविवर्धनःप्रतापेतपनोदमेशमनोगतौपवनोधिषणयाधिषणोनीतावुशनेशनईशानःप्रशस्तम
नाःसिंहसंहननःस्नातेषुभरतादिष्वभ्यक्तस्नातासुसीतादिषुचस्नातोविशोधितजटोविधृतविरजःपटोरावणप्रतिभटोहर्षो-
द्भटोरामोमंगलकृत्यतत्परैर्मंत्रिभिःकृतसूचनःस्यंदनमास्थायगृहीतरथ्यप्रग्रहेभरतेछत्रमाददानेशत्रुघ्नेगृहीतवालव्यजन-



योर्लक्ष्मणविभीषणयोराधितिष्ठतिशत्रुंजयंनामकुंजरंसुग्रीवेनवनागसहस्राण्यधिजग्मिवत्सुबद्धुषुवानरेषुप्रध्मापयत्सुशं-
खांस्ताडयत्सुदुंदुभींस्तालस्वस्तिकपाणिषुपुरोगामिषुगृहीताक्षतजातरूपादिमंगलवस्तुषुवादयत्सुकाहलीप्रभृतीनि-
वाद्यान्यनुचरेषुप्रतिगृहंध्वजोच्छ्रायंकुर्वाणेषुजनेषुहनुमदादिपराक्रमान्मंत्रिणांकथयन्पुरेपितुर्भवनंप्रविशन्स्वाशोकवनंसु
ग्रीवादींश्छत्रुघ्नेनसंदर्शयामास ॥ राज्याभिषेकार्थमुदारसत्वोरामस्यदृष्ट्वाभरतःकपीशं ॥ व्यज्ञापयत्सिंधुजलायतूर्णंस-
वानरान्व्यादिशदप्रमत्तः ॥ १४ ॥ हनूमदाद्याःकपयोगृहीत्वाकपेर्निदेशेनघटान्सरत्नान् ॥ सिंधुभ्यआजह्रुरथोपयांसि
न्यवेदयंस्तेगुरवेपितूर्णं ॥ ततोवसिष्ठोमुनिभिःसमेतोनिवेश्यसीतासहितंसरामं ॥ सुवर्णरत्नाखचितेसुपीठेसमभ्यषिंचच्छु
भवारिवारैः ॥ १६ ॥ ततःस्वहस्तेनकिरीटमस्यमस्तेवसिष्ठोनिदधौसभायां ॥ छत्रंचवालव्यजनंदधुस्तेशत्रुघ्नसुग्रीवविभीष
णाश्च ॥ ॥ राज्याभिषेकसमयेश्वसनंविधायमध्येस्त्रजंघटितरुक्मबिसप्रसूनां ॥ मालांददौरघुवरायसुखेनशक्रोराज्यंनिजं-
निहतकंटकमासयस्मात् ॥ १८ ॥ वृद्धश्रवःप्रेरितवायुहस्ताज्जग्राहहारंबहुरत्नचित्रं ॥ अदाद्घृणांप्रवरोपिदिव्यंहनूमते-

त्यद्भुतकर्मकर्त्रे ॥ राज्याभिषेकसमयेरघुनायकस्ययद्दिव्यगायनचयोपिजगौसुखेन॥ नृत्यंचचक्रुरपिनिर्जरवारकांतास्त च्छक्रदत्तमणिहारनिदर्शनेन ॥ सुग्रीवांगदयोर्हारमंगदेयद्ददौप्रभुः ॥ उचितंयत्तयोरासनाम्नैवकृतसूचनं॥ २१ ॥ यदिंद्रसं प्रेरितवायुदत्तहारग्रहावेक्षितदानरीतिः॥ रघुप्रवीरोपिसुतायवायोःसीताकरेणैवददौसुहारं ॥मुक्ताहारंहनुमतेददौरामो मुदान्वितः ॥ मुक्ताहारोपिसमयेबभूवायमितिप्रभुः॥ २३ ॥ यथार्हंसत्कृताःसर्वैरामेणकपिराक्षसाः॥ हृष्टाजग्मुर्निजस्था-नंस्वस्थानविगतैषणाः ॥ रामोपिसौमित्रिमपारवीर्यंभवाधुनात्वंयुवराजइत्थं ॥ उवाचनांगीकृतवान्यदासौसमभ्यषिंच द्भरतंतुतत्र ॥ सपौंडरीकैः पुरुवाजिमेधैरतर्पयद्देवगणांस्तदानीं ॥ यथाबभूवापिसयायजूकोयज्वापिदातासमभूद्वदान्यः २६ रामेप्रशासतिमहींकथमासतुष्टोलोकस्तदेतिविवरीतुमथाप्रसक्तिः॥ कस्माद्यतोपिनजहौकिलरामचंद्रंकस्मिन्ननेहसि ततोपिभृशंविमृग्यं ॥ विधायकार्यंकिलरामचंद्रःसंप्रेषयामासकथंस्वकीयान् ॥ स्वस्वालयंतत्कथमासतत्रशंकापिनेयंसति वाविवेके॥२८॥आकृत्यानलतांगतःसुषमयानीलोगलेदृश्यतेसुग्रीवोहनुमान्मुखेपरिगतंवैभीषणंलक्ष्मच ॥ ऋक्षाणामधि





पंरुचाविकचयंस्तारोद्गमंभावयन्रामोंगेषुनिजेषुभावयतियान्नित्यंमहामात्रतां ॥ प्रासूतमातायमभिख्ययांबातातोजगन्ना थइतिप्रतीतः॥ दांतेउपाख्याप्रथितेतितेनप्रणम्यसेराघवलक्ष्मणेन॥ श्रीनासिकक्षेत्रविराजमानगोदावरीयात्रिकयाज्यद त्तैः॥ वित्तैर्यदीयाभिजनस्यवृत्तिःसलक्ष्मणोयस्यकविस्तपस्वी॥ यान्यक्षराणिमुखमानसानिः सृतानिश्रीरामचंद्रचरितैधित सत्कथानि ॥ तैर्मेनवस्करमभूत्धृदयंतुतेषांनाभूद्गुणोनधिकृतिःपरमत्रहेतुः॥ काव्यदोषगुणयोर्ग्रहणनक्ष्वेडकौस्तुभकयो रिवमेब्धेः॥ शंभवंतुकृतिनोविधवंतुपूज्यशब्दसमयान्नविषादः॥ शाकेंकाष्टमुनिक्षमापरिमितश्रीशालिवाहाधिपेचाब्देप्रो पपदेभवेपरिवृतेरौद्र्याद्र्यातारया॥ चैत्रेमासिगतेप्युदकूचतरणौपक्षेसितेगीष्पतौसप्तम्यामगमत्समापनमियंचंपूकृतिर्ला क्ष्मणी॥ इतिश्रीमद्दांतोपाभिधलक्ष्मणविरचिताभिनवरामयणचंपूकाव्येद्वादशस्तबकःसंपूर्णः ॥ १२॥ बालापौसंविदा शुध्धौलेलेखाडिल्करौबुधौ॥ संश्राव्यरुरुचेयत्तत्धृदेतत्काव्यमांचकं॥ श्रीदांतोपाभिधेनजागन्नाथिनालक्ष्मणेननासिकेचं पूर्निर्मायतिलकोपाव्हस्यभास्करसूनोर्हरेर्नासिकेज्ञानमंदारांकनालयेसीसाक्षरैरंकिता ॥ सन१८७१ इ० (हा ग्रंथ इ०सन १८४७चा आक्ट २० व इ०सन १८६७चा आक्ट २५याप्रमाणे नोंदला आहे आणि या ग्रंथासंबंधीं मालकीचे सर्व प्रकारचे हक्क ग्रंथकर्त्यानें आपणाकडे ठेविले आहेत.)

॥ इत्यभिनवरामायणचंपूकाव्यंसमाप्तं ॥ श्रीशंवंदे ॥

॥ अथाभिनवरामायणचंपूकाव्यस्यशतकस्यचशुद्धिपत्रं. ॥

| पत्र | पृष्ठ | पंक्ति | अशुद्ध | शुद्ध. |
|---|---|---|---|---|
| ४ | १ | ६ | नान्मां | नाम्नां |
| ४ | २ | ४ | तान्यहि | ताञ्यहि |
| ४ | २ | ८ | मृतुं | मृतु |
| ५ | १ | ७ | प्तन्न | त्पन्न |
| ५ | २ | २ | बिश्राणि | विश्राणि |
| ५ | २ | ३ | रुघ्वांरंतु | रघ्वांरंतु |
| ५ | २ | ४ | मनर्ध्यं | मनर्घ्यं |
| ५ | २ | ९ | द्बनपुष्य | द्भनपुष्प |

| पत्र | पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|---|
| ६ | २ | ५ | पुंडरीका | पुंडरीक |
| ६ | २ | ५ | मुानः | मुनिः |
| ८ | १ | ८ | मार्यः | आर्यः |
| ९ | २ | २ | भिरऽयेन | भिरूयेन |
| ९ | २ | ६ | सुतारऽयं | सुतारूयं |
| १० | १ | २ | स्वतास्प | स्वतास्य |
| १० | १ | ६ | नियंतं | नियतं |
| १० | २ | ३ | म्रागीभूतं | भागीभूतं |

| पत्र | पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|---|
| ११ | १ | २ | देस्य | देवस्य |
| ११ | १ | ८ | कैकय | केकय |
| ११ | १ | ९ | श्रीमतं | श्रीमंतं |
| ११ | २ | ४ | त्रिष्कास | न्निष्कास |
| १२ | १ | ३ | परोक्षांणा | परोक्षाणां |
| १२ | १ | ३ | कुर्वना | कुर्वता |
| १२ | १ | ५ | स्वामिप्राय | स्वाभिप्राय |
| १२ | २ | १ | कुरुतें | कुरुते |

| पत्र | पृष्ठ | पंक्ति | अशुद्ध. | शुद्ध. | पत्र | पृष्ठ | पंक्ति | अशुद्ध | शुध्द. | पत्र | पृष्ठ | पंक्ति | अशुध्द | शुध्द |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १२ | २ | ४ | नंदेकन | नंदकेन | २६ | १ | १ | चतत्टाभिः | चतसृभिः | ३६ | १ | ५ | सखितो | सुखितो |
| १२ | २ | ६ | दूग्धो | दुग्धो | २८ | २ | २ | जायान् | ज्यायान् | ३६ | २ | ९ | मुदुतां | मृदुतां |
| १२ | २ | ८ | पुरायितुं | पूरयितुं | २९ | २ | २ | सार्त्ध | सार्ध | ३८ | १ | ९ | निष्टं | निष्ठं |
| १२ | २ | ९ | तांमसः | तांसः | २९ | २ | ५ | तत्वन् | तत्त्वन् | ३९ | २ | ९ | नयौधे | नयौचे |
| १५ | १ | ६ | स्तुनूजः | स्तनूजः | २९ | २ | ७ | प्रकोष्ट | प्रकोष्ठ | ४३ | १ | ३ | निमितं | निमित्तं |
| २२ | १ | ९ | सक्ता | सक्तां | ३२ [३१] | १ [२] | ७ [२] | निधि, न्वद्व | निधी,न्वब्द | ४३ | १ | ५ | तृर्णं | तूर्णं |
| २३ | १ | २ | धिभातं | विभातं | ३२ | १ | १ | नापि | नामपि | ५२ | १ | ३ | इत्ययंः | इत्ययं |
| २३ | १ | ७ | पृरणेच | पूरणेच | ३३ | २ | ८ | उदित, | उदितः | ५२ | २ | ७ | नगा | नुगा |
| २४ | २ | २ | नीनयुगं | मीनयुगं | ३४ | २ | ५ | रुपस्त्या | स्वस्त्या | ५७ | १ | १ | सिंव्हः | सिंहः अग्रेप्येवं |









| पत्र | पृष्ठ | पंक्ति | अशुद्ध | शुद्ध | पत्र | पृष्ठ | पंक्ति | अशुद्ध | शुद्ध | पत्र | पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ५८ | २ | १ | मानस | मानसं | ७८ | २ | ४ | नकाजा | नकात्मजा | ९१ | १ | ५ | देवभयां | देवभूयां |
| ६६ | २ | ९ | हटात् | हठात् | ८१ | १ | २ | निमृशन् | विमृशन् | १०१ | १ | ४ | ब्राह्म्य | ब्राह्म |
| ७५ | १ | २ | पर्वजनुः | पूर्वजनुः | ८१ | १ | ७ | समारा | ससारा | १०३ | २ | ९ | भत्वा | भूत्वा |
| ७५ | १ | ८ | हिषावारा | हिर्षीवीराः | ८३ | २ | ७ | भषणा | भूषणा | १०४ | २ | ९ | दशास्याः | दशास्यः |
| ७६ | २ | ६ | निभतं | निभृतं | ८५ | २ | ९ | विजह्य | विजह्या | १०९ | २ | २ | राप | रपि |
| ७६ | २ | ८ | पर्व | पूर्व | ८६ | १ | ३ | वरायान् | वरीयान् | ११२ | २ | ८ | विघृत | विधृत |
| ७७ | १ | ४ | अतप्रणय | अंतःप्रणय | ८६ | २ | २ | किंकराणा | किंकराणां | २ | १ | ८ | चर्म्मर्णी | चर्मके |
| ७७ | २ | ४ | कनीयासं | कनीयांसं | ८८ | १ | ६ | लोकिताः | लोकिता | ३ | १ | ८ | मंबरं | मंबरे |
| ७७ | २ | ४ | चंकृमे | चंक्रमे | ९० | २ | ८ | क्रीडमान | क्रीडमानि | ६ | २ | ८ | सःस्यात् | सस्यात् |
| ७८ | १ | ६ | गतास्युः | गताःस्युः | ९१ | १ | १ | कारस्ता | कापुरस्ता | १२ | २ | ५ | जैच्छैस्न्या | जिच्छिस्न्या |

